श्रीः

# शङ्करविजयनाटकम्

महामहोपाध्याय पं० मथुराप्रसाददीक्षितेन
विरचितम्

तच्च

काशीस्थमोतीलालबनारसीदास-
संस्कृतहिन्दीपुस्तकविक्रेत्रा
प्रकाशितम् ।

प्रथमावृत्तिः ] १९५२ [ मूल्यम् १)

श्रीः

अस्तीदं सकलदार्शनिक-यथार्थसिद्धान्तदर्शकं शङ्करविजय-
नाटकमिति "रत्नं समागच्छतु काञ्चनेने"ति सिद्धान्त-
सिद्धसरणिमाश्रित्य सर्वदार्शनिकतत्त्वाभिज्ञानां
गृहमन्त्रिणां श्रीसम्पूर्णानन्दमहोदयानां
करकमले समर्पयते महामहोपा-
ध्यायो मथुराप्रसाददीक्षितः।

T

श्रीः

# शङ्करविजयनाटकम्

## प्रथमोऽङ्कः

सूत्रधारः—( प्रविश्य )

कामक्रोधविमोहमत्सरमदप्रोन्माथिनी सर्वतो
लोभोन्मूलकरी विरागजननी सन्मुक्तिसौख्यप्रदा ।
विघ्नध्वान्तदिवाकरः कलिमलप्रध्वंसकृच्छान्तिदा
जीयात्सा भगवत्पदाम्बुजतटं प्रद्योतयन्ती प्रभा ॥ १ ॥
सिद्धये माधवो भूयादज्ञानतिमिरापहः ।
यन्मुखाम्भोजसंभूता भारती भाति भूतले ॥ २ ॥

नान्द्यन्ते

अहो ! अद्य विविधदेशदेशान्तरागततर्कवितर्कचातुरीचतुरविपश्चिन्निचय-रुचिरा विचक्षणप्रवरसदसत्पक्षप्रेक्षणाक्षमचक्षुरियं परिषदिति शिमला-प्रान्तीयवघाटराज्याधिपतेर्दुर्गासिंहमहाराजस्य गुरुणा जैनरहस्याभिधान-राजेन्द्रकोषपाणिनीयसिद्धान्तकौमुद्याद्यनेकग्रन्थनिर्मात्रा विद्यावारिधि-महामहोपाध्यायपदधारिणा पण्डितमथुराप्रसाददीक्षितेन प्रणीतेन दार्श-निकशङ्करविजयनाटकेनोपस्थातव्यमस्माभिरिति प्रतिपात्रं विधीयतां यत्नः ।

( किञ्चिद् विचिन्त्य )

काठिन्याद् विषयस्य नीरसतया प्रौढत्वतो धीमतां
लोकानामथ मत्सराकुलतया शङ्के कृतावात्मनः ।
सन्तुष्टाः सुधियो भवन्ति किमतो नो वेत्ति संदिह्यते,
किन्त्वस्मिन् समये नवां कृतिमिमां ज्ञात्वा मनो मोदते ॥३॥

( मनसि. ) अस्तु तावत्, नटीमाह्वयामि ।

( इतस्ततोऽवलोक्य )

( प्रकाशम् ) अयि आर्ये !

( मनसि )

करतलविन्यस्तवदनेयं किमपि ध्यायन्ती स्थितेति न मे वाचं शृणोति ।

ग्रन्थिर्भ्रुवोरूर्ध्वगते कनीनिके शये शयानं मुखचन्द्रमद्भुतम् ।
विलोचने सामि निमीलिते मनो विलीनवच्चित्रगतेव भात्यसौ ॥४॥

अस्तु, सम्मुखं गत्वा पृच्छामि, ( तथा करोति । )

( प्रकाशम् ) अयि आर्ये !

नटी—( ससंभ्रमम्, उत्थाय )

*अयि अज्जउत्तो किमाणवेदि ।

सूत्रधारः—किमद्योद्विग्नमानसेव प्रतिभासि. किं जातम् ? ।

नटी—†कण्णा कण्णिगदाए सुयं, 'ण किं पि कम्मुणो फलं होइ'त्ति लोगायदिगा वुच्चंति । णत्थि संसारुप्पायगो कम्माणं साक्खी फलप्पदाई वा इस्सरो त्ति बुद्धारिहंत्ताइमताणुयाइणो परूवयन्ति । खादन्तु मंसंति

---

* अयि आर्यपुत्रः किमाज्ञपयति ।

† कर्णाकर्णिकतया श्रुतम्, न किमपि कर्मणः फलं भवतीति लौकायतिका ब्रुवन्ति । नास्ति संसारोत्पादकः कर्मणां साक्षी फलप्रदायी वा ईश्वर इति बुद्धार्हता-दिमतानुयायिनः प्ररूपयन्ति । खादन्तु मांसमिति निरूप्य लौकायतिककौलादिकैः

निरुविय लोगायदिगकोलादिएहिं पडिप्पन्नबुद्धीहिं सव्वा वि गाओ महिसीओ वि खाइज्जंति, घिअखीराणि दुल्लहाणि होहिस्संति । किं कुम्मेय, अविय एव्वं अम्हे परिस्समस्स वि फलं ण होहिस्सइ त्ति मे मणसि अंधगारो संवुत्तो ।

सूत्रधारः—मा शुच्यताम्, ( अङ्गुल्या निर्दिशन् ) पश्य—

तमोमयी नैव सदा निशीथिनी विनाशिनी सा भवितेति मे मतिः ।
उदेति विद्वज्जनवृन्दवन्दितो विकाशयन् पद्ममिहैति शङ्करः ॥५॥

नेपथ्ये—आः ! क एवं मयि स्थिते संसारोत्पादक ईश्वरो नास्ति, कर्मणां फलं न भविष्यतीति स्थापयितुं वक्तुं वा प्रभवति । ( नटी भीतभीतेव सचकितमवलोकयति )

सूत्रधारः—आर्ये ! त्वयोक्तं वचः पक्षसाध्यस्थापकप्रतिवादिवचनमिव मन्यमानः क्रोधास्फुरिताधरोष्ठो दिगन्तविख्यातकीर्तिर्नास्तिकमतसमूलोन्मूलको दिग्विजयप्रस्तुतः श्रीशङ्कराचार्य इहैव समायाति, ततस्त्वमवहिता भव । अहमपि गत्वा भावमिश्रान् विज्ञापयामि, यदवहितैर्भवद्भिर्भाव्यम् । ( इति निष्क्रान्तः सनटीकः सूत्रधारः । )

इति प्रस्तावना

—•—

( ततः प्रविशति प्रभास्फुरितमुखारविन्दमण्डलो वेदोक्तमर्यादास्थापकः स्वशिष्यसहितः शङ्कर इव शंकराचार्यः । पुनः 'आः क एवं मयी'त्यादि पठति)

नेपथ्ये—उद्धरिष्यति को वेदान् वेदार्थान् स्थापयिष्यति ।
जनानां तर्कवैमत्यं कारुण्यात्प्रतिरोत्स्यति ॥६॥

---

प्रत्युत्पन्नबुद्धिभिः सर्वा अपि गावो महिष्योऽपि खाद्यन्ते । घृतक्षीराणि दुर्लभानि भविष्यन्ति । किं कुर्याम् ! अपि च एवम् अस्माकं परिश्रमस्यापि फलं न भविष्यतीति मे मनसि अन्धकारः संवृत्तः ।

शङ्करः—( इतस्ततोऽवलोक्य ) आः कुतोऽयं कारुण्यरसाप्लुतः कस्याप्यार्तनादः श्रूयते ? ( इति चतुर्दिक्ष्ववलोक्य स्वरसंयोगं नाटयति । )

आं ज्ञातम्, नास्तिकमतोत्तप्तस्य कस्याप्यार्तनादोऽयम्, (पुनस्तत एव-)

वेदतत्त्वापहर्तॄणामीश्वरे परिपन्थिनाम् ।
समूलतः स्थितिं चैषां कः सुधीर्नाशयिष्यति ॥ ७ ॥

शङ्करः—(पुनः स्वरसंधानं नाटयति) आं ज्ञातम्, पश्चिमदिशातः कस्यापि नास्तिकवादखिन्नस्य मुमूर्षोर्वृद्धस्येवार्तशब्दः श्रूयते । ( इति किञ्चिद् गत्वा ( पटोन्नयनम् ) साश्चर्यमिव कमपि तुषाग्नौ दह्यमानं पश्यन्— )

कोऽयं प्राणनिरुत्सुको जगदिदं बुद्धौ मृषा भावयन्,
लोकान् वेदविरोधतो निरयगान् कारुण्यतो बोधयन् ।
अन्तर्ध्यानपरिस्फुटत्सुमहसा प्रत्यक्षमालोकयन्,
आं ज्ञातं भगवान् कुमारिलमुनिः शोकेन संत्रस्यते ॥८॥

( किञ्चित् पार्श्वतः समुपगत्य )

उद्धरिष्याम्यहं वेदाँल्लोकानुग्रहकाङ्क्षया ।
वेदार्थान्स्थापयिष्यामि नास्तिकोन्मूलनं चरन् ॥९॥

कुमारिलः—( किञ्चिन्नेत्रे समुन्मीलयन्निव )

आः ! कोऽयं मां विलक्षणनिस्यन्दमानसुधासमुद्भूतचैतन्यानन्दसंदोहसंपूरितान्तःकरणं संकल्पविकल्पकल्पनासमुच्छेदसंजातपरब्रह्मसाक्षात्कारसमानशब्दश्रवणप्रमोदमेदुरं नास्तिकमतसमुच्छेदप्रतिज्ञावाक्यश्रवणधारासंपातविध्मापितमनस्तापप्रसन्नमानसं हठेन परलोकगमनात्प्रतिरोधयति ? ।

पुनः शंकरः—कुतर्कसंशयोच्छेत्ता वेदार्थज्ञानभासुरः ।
समूलं नास्तिकमतोन्मूलने प्रस्तुतोऽस्म्यहम् ॥१०॥

कुमारिलः—( स्वर्गादायातान् पार्षदानुद्दिश्य )

अयि पार्षदाः ! तिष्ठत किञ्चित्कालं यावदहमेनमवलोक्याशातीतं नेत्र-सुखमनुभवामि ।

( इति किंचिन्नेत्रे उन्मील्य पश्यन् )

कोऽयं स्वप्रभयाऽतिरञ्जितपटो वेदान्तविद्यानुगो
ब्रह्माद्वैतनिरूपणे निपुणतां दृष्ट्या समुद्बोधयन् ।
बौद्धोक्तेश्च समूलतो निरसने बद्धादरो भासते
नूनं निर्मितविग्रहः स भगवान् साक्षादसौ शङ्करः ॥११॥

( पूर्णतश्चक्षुषी उन्मील्य ) ॐ नमो नारायणाय ।

शङ्करः—नारायणाय—तुषाग्नौ दह्यते कस्मात्कर्मठेन त्वयाऽधुना ।
कुमारिलः—बौद्धादध्ययनस्येदं प्रायश्चित्तं विधीयते ॥१२॥

शङ्करः—आः ! दारुणमिदं प्रायश्चित्तमाचरसि । अथापि तिष्ठ कियत्कालं यावदहं नास्तिकमतं समूलमुन्मूलयामि, पुनरशेषभारत-वर्षीयैकधर्ममवलोक्य किञ्चित्सुखमनुभूय परलोकं गमिष्यसि ।

कुमारि०—युष्मद्दर्शनमात्रतो जगदिदं बुद्धौ मृषा भासते
बुद्धाः स्वीयदुराग्रहग्रहिलतां त्यक्त्वा स्वयं त्वामिताः ।
सर्वत्रैव भवन्मुखाम्बुजगतं ब्रह्मामृतं द्योतते
जातं चेतसि मे प्रकाशितमिदं साक्षात् स्वयं बुध्यते ॥१३॥

शंकरः—तर्हि जातमेवाद्वैतज्ञानं, यथासुखमनुभूयताम् ।

कुमारि०—न खलु अद्वैतज्ञानमेव जातम्, किन्तु ज्योतिःस्वरूपब्रह्म-साक्षात्कारोऽपि भवद्दर्शनत एव जात इत्यहं मन्ये ।

तत्र हि—भास्वत्सूर्यसहस्रतोऽधिकतरा सर्वत्र तुल्यानुगा
स्वात्मानन्दसमुद्रलोललहरी संजायते सर्वदा ।

ब्रह्माद्वैतमहा परं सुखगता सच्चिन्मया व्यापिनी
स्वान्ते ब्रह्मणि लीयते मम हृदः काचित्प्रभा भासिनी ॥१४॥

इदमपरं वक्तव्यम् , यदितः प्रयागान्नातिदूरे नर्मदानदीप्रान्ते दक्षिणस्यां दिशि माहिष्मतीनगरे मण्डनमिश्रस्थानम् । तत्र तमुद्बोध्य स्वात्मानुयायिनं शिष्यं विधाय बौद्धानुद्बोधयत ।

यतः— नाग्रहं वितनुते हृदयेऽसौ नैव वादविमुखोऽपि मनस्वी ।
शिष्यतामुपगमिष्यति नूनं बोधितः श्रुतिपदैरनुधावन् ॥१५॥

स च सकलशास्त्रनिष्णातः, तदुद्बोधने परमानन्दसुखं लोकोपकारश्च । लोकाः स्वस्वव्यापार-प्रवृत्ति-निर्मित-लौकिकानन्दकर-संसार-समारम्भाः त्वद्विजयावगति-भवत्पदारविन्दपरागसंश्लेषण-समुद्भूतपरमानन्द-मेदुराः गृहस्था भवन्सतानुगामिनो भविष्यन्ति ।

शङ्करः—यथा युष्माकमनुमतिः । ( इति निष्क्रान्ताः सर्वे )

पटाक्षेपः

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधिमथुराप्रसाददीक्षित-कृतौ शङ्करविजयनाटके प्रथमोऽङ्कः ।

T

# द्वितीयोऽङ्कः

## पटोन्नयनम्

( ततः प्रविशति जलानयनाय गच्छन्तीं दासीमवलोक्य कथयन् शङ्कराचार्यः । )

शङ्करः—अयि बाले !

मण्डनस्य विदुषां परिषद्भूमण्डनस्य सदनं क्व विभागे ।

दासी—*जत्थ कीर महिलाउ सईणं साहयन्ति सुअ एव्व पमाणं ॥१॥

शङ्करः—अयि प्राकृतभाषायां शिक्षिता ते कवित्वशक्तिः—उत स्वयमासादिता ?

दासी—†किण्णु कस्स वि कहंचिय सत्ती केण णाम सुजणेण विदिण्णा।

जम्मओ गुरुगिरा उ जणाणं साउ होइ विइयंति कहं णु ॥२॥

शङ्करः—इदमेव पृच्छ्यते, गुरुकृपातः सोपलब्धा स्वयमासादिता वा ?। अस्तु। किं त्वादृशाः सर्वाः, त्वमेव सर्वोत्तमा वा ?।

दासी—‡जत्थ वेय विहियम्मि सुइत्ते वट्टए तिरि भवे वि वियारो ।

तत्थ का कविकला उ वलाण लाउ माणसगयंवि कहेंति ॥३॥

शङ्करः—( मनसि ) अत्रत्यस्त्रीणां वैदुष्यं परमोत्तमम्, मन्ये तासां विजयो नैव सुकरः । अथवा किं ताभिः सह जयाजयाभ्याम्। (पुनर्विचिन्त्य) कदाचिन्मण्डनधर्मपत्न्येव शास्त्रार्थविचाराय प्रभवेत् । अथवा किं तया,

---

* यत्र कीरमहिलाः श्रुतीनां साधयन्ति स्वत एव प्रमाणम् ।

† किन्तु कस्यापि कथंचित् शक्तिः केन नाम स्वजनेन वितीर्णा ।

जन्मतो गुरुगिरातो जनानां सा तु भवति विदितम् इति कथं नु ॥२॥

‡ यत्र वेदविहिते सुतित्वे वर्तते तिर्यग्भवेऽपि विचारः ।

तत्र का कविकथा अबलानां तास्तु मानसगतमपि कथयन्ति ॥३॥

स्त्रीजातिः सा सुजया। अलं विचारेण। ( इति मण्डनगृहाभिमुखं चलति। किञ्चिद्गत्वा, परितोऽवलोक्य ) शिष्यं प्रति ( प्रकाशम् ) मन्ये मण्डनमिश्रस्येदं स्थानम्। अहो ! सर्वतः कपाटानि पिहितानि। कथमत्र प्रविशेयम्। ( पुनर्मण्डनशिष्यावलोक्य ) कथमेतावित एवाभिगच्छतः।

प्रथमः शिष्यः—नमो नारायणाय।

शङ्करः—नारायणाय।

द्वितीयः—( प्रणम्य-साश्चर्यमिव पश्यन् ) महाराज ! क्व जिगमिषवो भवन्तः।

शङ्करः—मण्डनसविधे श्रुतीनामर्थं बोधयितुम्।

प्रथमः—आः ! बोद्धुमिति वक्तव्यम्।

शंकरः—नहि २, श्रुत्यर्थं बोधयित्वा ब्रह्माद्वैतानन्दामृतं पाययितुं जिगमिषामि।

द्वितीयः—महाराज ! कथमिव गुरोः सर्वज्ञतामपह्नुषे।

शंकरशिष्यः—कः सर्वज्ञ इति तु निर्णयः श्रुत्यर्थविचारसमनन्तरं भविष्यति।

प्रथमः—अलं वितण्डावादेन, गुरुरद्य कर्मकाण्डलग्नः सायं बहिरागमिष्यति, आवां गच्छावः। ( इत्युभौ गच्छतः। )

शंकरः—( स्वशिष्यान् ) यूयमास्थानमण्डपिकायामेव तावत्तिष्ठत, अहं योगबलेनोड्डीय तत्सविधे कर्मकाण्डभूमिमेव गच्छामि। ( ततः पद्मपादादयः परिसर्पन्ति। )

पटोन्नयनम्

( ततः प्रविशति श्राद्धं विदधानो मण्डनमिश्रः, सम्मुखं पुरोहितः शंकराचार्यश्च। )

मण्डनः—( साश्चर्यं शङ्कराचार्यमवलोक्य )

मुण्डी कस्माद्—

शंकरः—आगलात्

मण्डनः—पद्धतिः का ?

शंकरः—वेदाः सर्वे यैर्जना यान्ति मोक्षम् ।

मण्डनः—( किंचित्स्मित्वा ) ।

वाग्मिन्नेतद्वाक्छले ते पटुत्वं
यस्मादन्यत्पृष्टमन्यत्त्वमात्थ ॥४॥

( पुनर्निवर्ण्य )—

धत्से कन्थां गर्दभेनाप्यवाह्यां कस्ते
भारः स्याच्छिखासूत्रकाभ्याम् ।

शङ्करः—त्वत्पित्रापीमामवाह्यां दधेऽहं,
भारस्त्वभ्याः स्याच्छिखासूत्रकाभ्याम् ॥ ५ ॥

मण्डनः—( सक्रोधम् )

रे रे मुण्डिन् किं वृथैवाभिधत्से
श्रौतज्ञाने किं तवास्ति प्रबोधः ।

शङ्करः—श्रुत्या युक्त्या बोधयिष्ये विधेयं
येन त्वं स्या मोक्षमार्गानुगामी ॥ ६ ॥

मण्डनः—( रक्तेक्षणः ) रे रे वावदूक ! वैतण्डिक ! तव वादकण्डू-मस्मदीया बहवः शिष्या अप्यपनेतुं शक्नुवन्ति । ममोन्मुखे त्वकिञ्चित्कर एव ।

शङ्करः—( किञ्चित्स्मित्वा । ) युक्तम् २,—

अशक्नुवन्तः शास्त्रार्थे कुर्वन्त्येव महारवम् ।
युक्तायुक्तविचारे तु विरलाः प्रभवन्ति हि ॥७॥

उपाध्यायो जैमिनिः—मण्डन ! नायं क्रोधावसरः, अक्रोधनेनैव श्राद्धावसरे भाव्यम् ।

किञ्च—

गृहीतदण्डः श्राद्धे यो वेदतत्त्वार्थभासुरः ।
योगमार्गेण संप्राप्त एष साधुरुपास्यताम् ॥ ८ ॥

मण्डनः—( निर्वर्ण्य ) युक्तमुपाध्याय ! यथावसरमनुबोधितोऽस्मि—( चक्षुषी प्रमार्ज्य ) स्वामिन् ! नमो नारायणाय ।

शङ्करः—नारायणाय ।

मण्डनः—महाराज ! आज्ञापय, तावत्किञ्चिदवशिष्टं कार्यं पूरयितुम् ।

शङ्करः—अनुष्ठीयताम्—अनुष्ठीयताम् ।

मण्डनः—( पिण्डान् स्थाल्यां निधाय आघ्राय च स्थालीं स्कन्धेन स्पर्शयित्वा भूमौ निदधाति । वेदीं प्रमार्ज्य शंखचक्राङ्कं कृत्वा पूजयित्वा प्रणम्य सर्वं विसृज्य च उत्तिष्ठति । ततः शङ्करसविधे समुपविश्य ) महाराज ! क्षमस्व ममापराधम्—( इति शिरसा प्रणमति । )

शङ्करः—( हस्तेनोत्थापयन् ) उत्तिष्ठोत्तिष्ठ ।

मण्डनः—( उत्थाय ) स्वामिन् ! भिक्षार्थमनुगृह्यताम् ।

शङ्करः—त्वया सह वादार्थमुपागतः, स एवास्माकं भिक्षा ।

मण्डनः—( साश्चर्यमवलोक्य मनसि ) कथमसौ वटुर्दण्डी साभिमानं वादमभिकाङ्क्षति । ( प्रकाशम् ) तामपि भिक्षां पूरयिष्यामि । उत्तिष्ठ ।

( शङ्करः सानन्दमुत्तिष्ठति । सर्वे प्रचलन्ति । )

पटाक्षेपः

( ततः प्रविशत्येकतः शिष्यसहितः शङ्कराचार्यः, अपरतः सस्त्रीको मण्डनमिश्रः श्रोतारः शिष्याश्च, सर्वे यथायथमुपविशन्ति )

शङ्करः—विद्वन् ब्रह्मैवास्ति लोकेषु सर्वं नान्यत्किञ्चिद्भेदभावत्वमाप्तम् ।
मिथ्यैवैतद् दृश्यमानं समस्तं भ्रान्तावृत्या मीयते मूढलोकैः॥९॥

अनाद्यविद्याप्रपञ्चात्मनावभासमानं ब्रह्मैव सत्, तज्ज्ञानादेव भवभयापगमः । श्रुतिरपि तदर्थमेव प्रतिपादयति । "सर्वं खल्विदं ब्रह्म"

"नेह नानास्ति किञ्चन" "ब्रह्मविद् ब्रह्मैव भवति" "तमेव विदित्वाऽति-मृत्युमेति" "न स पुनरावर्तते, न स पुनरावर्तते" इति ।

मण्डनः—चिद्रूपे ब्रह्मणि कथं वेदान्तानां सुसंगतिः ।
जीवेशयोर्विभिन्नत्वादनैक्यं सुव्यवस्थितम् ॥१०॥

अयि महाभाग दण्डिन् ! पूर्वोक्तानि ब्रह्माद्वैतप्रतिपादकवाक्यानि ब्रह्मणि कर्तृदृष्टिमात्रबोधकानि । वस्तुतस्तु जीवेशौ परस्परं विभिन्नावेव । कर्मत एव मुक्तिः, तथा च श्रुतिः—"यावज्जीवमग्निहोत्रं जुहुयात्" "अपाम सोममृता अभूम" इत्यादिः । वेदान्ताश्च जीवे ब्रह्मदृष्टिविधायकतया कर्तृप्रशंसाद्वारा कर्मशेषा एव । अन्यथा चानर्थक्यं तेषां स्यात् ।

शङ्करः—स्वीयेष्टसाधनज्ञानात्प्रवृत्तिरुपपद्यते ।
न कार्ये दृश्यते शक्तिः पदानामिति चिन्त्यताम् ॥११॥

अत एव 'तत्त्वमसि श्वेतकेतो !' इत्यादि वेदवचनानि च जीवेशयोर्निर्बाधमैक्यं प्रतिपादयितुमीशते । ज्ञानकाण्डस्य वाक्यानां च कुतः कर्मशेषता सम्भाव्येत। अपि च—लिङादिपदाभावान्न तेषां जीवे ब्रह्मदृष्टि-विधायकत्वम् , किञ्चैवं—

मुक्तेः क्रियाजन्यत्वादनित्यत्वं स्यात् , त्रिजगति समस्तकार्याणां तथैव दर्शनात् , न चेष्टापत्तिः, तत्त्वज्ञानादावरणादिप्रतिबन्धध्वंसेन अतथात्वाद् । 'न स पुनरावर्तते, न स पुनरावर्तते' इत्यादिवेदवचनान्यपि तथैव प्रतिपादयमानानि संगच्छन्ते ।

मण्डनः—दण्डिन् महाभाग! कथं विवादः प्रत्यक्षदृष्टेऽप्यतथात्वमीष्टे ।
शङ्करः—अभेदयन्त्यः श्रुतयस्तु सर्वाः, जीवेशयोरैक्यमुपाचरन्ति ॥१२॥

मण्डनः—

अज्ञोऽस्ति जीवो न तथा परेशो जीवोऽस्ति बद्धो न स बन्धमेति ।
कर्मादिभोक्तृत्वतया प्रसिद्धो ब्रह्मैक्यमाप्नोति कथं नु जीवः ॥१३॥

अपि च—न खलु प्रत्यक्षदृष्टं वस्तु केनापि प्रमाणेनापह्नोतुं शक्यते। द्यावापृथिव्योः सूर्याचन्द्रमसोर्जलज्वलनयोर्भेद इव जीवेशयोर्भेदः सुस्पष्ट एव। एभ्यश्चापि विभिन्नमेव ब्रह्म।

शङ्करः—प्रत्यक्षं कर्मठवर! कथमत्रोपयुज्यते।

इन्द्रियाणामसान्निध्याज्जीवब्रह्मविभेदतः ॥१४॥

असान्निध्येऽपि वस्तूनां प्रत्यक्षं मानसं भवेत्।

परं न तत्प्रमां याति लोके वन्ध्यासुतादिवत् ॥१५॥

किञ्च—प्रत्यक्षदृष्टावपि नैव सत्स्यात्सद्भिस्त्विदं साधु विचारणीयम्।

शङ्खं यथा पीतमिति प्रमीते तथैव जीवेशगतं विभेदम्॥१६॥

मण्डनः—नन्वेष पीतिमनशात्प्रमिणोति पीतं

सर्वत्र दोषवशतस्त्वतथात्वमीष्टे।

शङ्करः—जीवस्त्विहापि तमसावरणस्य दोषात्

भेदं प्रमाति न तु वस्तुतया तदेतत् ॥१७॥

अपि च—पूर्वप्रवृत्तस्य निर्बलस्य तस्य प्रबलया श्रुत्या बाध एव भविष्यति। 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इति सिद्धान्तात्–इति।

मण्डनः—माऽस्तु प्रत्यक्षतो भेदोऽनुमानेन तु सिध्यति।

ईश्वराद्भिद्यते जीवोऽसर्वज्ञत्वाद् घटादिवत् ॥१८॥

शङ्करः—सर्वाभेदं साधयन्ती श्रुतिर्घटाभेदमपि साधितवत्येवेति साध्यादन्यस्याप्रसिद्धेरेव नानुमानं प्रवर्तेतेति कथं तेनाद्वैतश्रुतेर्बाधशङ्का?

मण्डनः—अये महानुभाव! 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इत्यादिश्रुतिरेव स्पष्टतो जीवेशयोर्भेदं प्रतिपादयतीति पुनरप्युपचरितार्थैवाभेदश्रुतिरिति मन्यस्वेति न जीवेशयोरभेदः।

शङ्करः—(सस्मितम्) महाभाग! पञ्चरहस्यब्राह्मणे एतन्मन्त्र-

व्याख्यानावसरे 'अत्तीति सत्त्वमुच्यते, अभिपश्यतीति ज्ञ' इति कण्ठत एव प्रतिपादनात् सत्त्वपदवाच्यान्तःकरणस्य ज्ञपदवाच्यात् परमात्मनोऽभेदं साधयन्तीयं श्रुतिः कथं जीवेशयोर्भेदसाधिकेति भवानेवावलोकयतु ।

मण्डनः—अहो संयमिन् ! अचेतनस्यान्तःकरणस्य भोक्तृत्वं श्रुत्युक्तं कथमुपपद्यते ?

शङ्करः—अये ! पण्डितमण्डलाखण्डल !

यथाग्नियोगतो लौहे दाहकत्वं प्रजायते ।
तथा चिदनुसंसर्गात् भोक्तृत्वं तस्य युज्यते ॥१६॥

मण्डनः—अस्त्वेतत्, परन्तु भूतं पिबन्तौ सुकृतस्येत्यादिश्रुतिश्छायातपवत् जीवेशयोरात्यन्तिकं भेदं व्याहरन्ती बाधिका स्यात् ।

शङ्करः—सा व्यवहारसिद्धं भेदमनुवदन्ती न पारमार्थिकमभेदं पीडयेत् । पारमार्थिकः स तु नान्यप्रमाणगोचरः—इत्यपूर्वः, एतदेवास्यापूर्वत्वम्—यन्नान्यप्रमाणेन दर्शयितुं पार्यते । एवं च अपूर्वार्थबोधिका त्वद्वैतश्रुतिरनुवादिकां तामेव द्वैतश्रुतिं बाधेत ।

मण्डनः—परावरज्ञो भगवान् जैमिनिः कथं वितथवादी स्यात् ? स हि सर्ववेदवाक्यानां कर्मपरत्वं कर्मभ्य एव च मुक्तिमुपादिशत् । निरास्थच्चेश्वरानुमानम्—इति श्रुत्यर्थबोधादद्वैतत्त्वे सिद्धेऽपि मे मनः साम्प्रतमपि संशेते ।

शङ्करः—नासौ वितथवादी, अपि तु वयमेव यथार्थज्ञानाभावात्तत्सिद्धान्तं न सम्यगालोचयामः । स हि महाकारुणिको विषयोन्मुखान्मनुजानाकलय्य तदनुगामिनैव पथा तान्मोक्षपथिकांश्चिकीर्षुर्वेदानां कर्मपरत्वं कर्मभ्यश्च मुक्तिमुदाजहार । तथा च वैदिकसत्कर्मभ्यः क्षपितेऽन्तर्मले स्वत एव ज्ञानाभिमुख्यं संपत्स्यत इति परम्परयाऽऽत्मबोधफल एव कर्मणि तस्य तात्पर्यम् । किञ्च—औपनिषदं पुरुषमीशमनेकशो दृष्टवाधैरनुमानैः साधयतः काणभुजादीन् श्रुत्यैव स ज्ञेयो नानुमानादिभिरिति प्रत्याययन् तदीयानुमानादीन्निराकार्षीत्; नत्वीश्वरसत्तां निरास्थत् ।

मण्डनः—( मनसि ) युक्तं सर्वतो निरवद्यमेवैतत्कथनं प्रतीयते ।

( आकाशे देवस्वरूपेण कुमारिलेन दुन्दुभिनादः क्रियते । )

( ततः कुतश्चिदाकाशात्— ) साधु शङ्कर ! साधु !! एतदेवास्माकं तात्पर्यम् । सम्यगवगतं भवता ।

मण्डनः—( पुनर्मनसि ) आः ! देवस्वरूपेण स्थितो जैमिनिरेव साक्षादनुमोदयति !!! ( प्रकाशम्-सगद्गदम् ) अकारणिककरुणानिधे !

संसारसागरे मग्नो रक्षितोऽहं कृपानिधे ! ।
नाशितं हृदयध्वान्तं चक्षुरुन्मेषितं त्वया ॥२०॥

( इति वदन्—पादयोः पतति । )

शङ्करः—( सप्रेम शिरः स्पृशन् ) उत्तिष्ठ ब्रह्मामृतमाप्नुहि ।

मण्डनः—( उत्तिष्ठन् सर्वतः पश्यन् । )

आश्चर्यं परितः प्रभाविकसितं सर्वं समुद्द्योतितं
केयं चेतसि मे चमत्कृतिरहो स्वानन्दसच्चिद्गता ।
लोकालोकगतः पदार्थनिवहः सर्वः स्फुटं भासते
संसारादवतारितोऽस्मि भगवन् ! ज्ञानाम्बुधे पाहि माम् ॥२१॥

( इति पुनः पादयोः पतति )

पटाक्षेपः

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधिमथुराप्रसाददीक्षित-कृतौ शङ्करविजयनाटके द्वितीयोऽङ्कः ।



# तृतीयोऽङ्कः

## पटोन्नयनम्

### विष्कम्भः

( ततः प्रविशतः पुष्पाण्यवचिन्वन्तौ चन्दनदासशिवप्रसादौ )

चन्दन०—*ही ही भो सरस्सुतीए मण्डणभज्जाए सह संकरस्स सत्थत्थो लोगुत्तरचमक्कारगो संजाओ ।

शिवप्र०—अथ किम् । शङ्करस्तु साक्षादवतीर्णः शङ्कर एव ।

चन्दन०—†अयि महाणुहाव ! किं णाम से पडुत्तरम्मि वत्तव्वं ? तत्थ ठिएहिं अम्हेहिं सव्वेहिं चेव्व एव्वं मुणं, जंउड्ढरेअसा अणेण कामकलापुच्छाओ णेव पडुत्तरो समप्पइस्सए । परं तेण उ सविसेसं पडुत्तरियं ।

शिवप्र०—आः ! किं नाम तत्र वक्तव्यम् । स तु सर्वज्ञ एवेत्यत्र न किञ्चिदपि संदेहः । तद्बुद्धौ करामलकवत्सर्वं प्रतिभासते ।

चन्दन०—‡किं किं पडुत्तरियं ति दूरट्ठिएहिं अम्हे हिं णेव सुयं ति तुमे एव्व कहेसु ।

शिवप्र०—तेन एवं कथितम्—पद्मिनी-चित्रिणी-शंखिन्यस्त्रिधा स्त्रियः, मतान्तरेण हस्तिनीति चतुर्धा । एवं शशमृगवृषभास्त्रिविधाः पुरुषाः, मन्तान्तरेणाश्वश्चेति चतुर्थः । एतेषां शशादीनां पद्मिन्यादिभिः सह यथा-

---

* अह ह भोः ! सरस्वत्या मण्डनभार्यया सह शङ्करस्य शास्त्रार्थो लोकोत्तरचमत्कारकः संजातः ।

† अयि महानुभाव ! किं नाम तस्य प्रत्युत्तरे वक्तव्यम् ? तत्र स्थितैरस्माभिः सर्वैश्चैवमेव ज्ञातम्, यदूर्ध्वरेतसा अनेन कामकलापृच्छाया नैव प्रत्युत्तरं समर्पयिष्यते । परं तेन तु सविशेषं प्रत्युत्तरितम् ।

‡ किं किं प्रत्युत्तरितमिति दूरस्थितैरस्माभिर्नैव श्रुतमिति त्वमेव कथय ।

यथं योगे सुखम्, एकान्तरेण पुरुषौत्कृष्ट्येऽपि न क्षतिः। अयथायथं योगे आसनभेदप्रभेदाः सुखकराः। परं सर्वमपि सांसारिकं सुखं सुखाभास एव। परमार्थतस्तु सुखं सच्चिदानन्दपरमात्मनः स्वरूपज्ञाने एव। यथा प्रत्यक्षदृष्टेऽपि शुक्लशंखादौ पीतरोगाक्रान्तः शुक्लं शंखं पीतमेव प्रमीणीते, एवमेव सर्वमेव सांसारिकं सुखं सुखाभास एव। वस्तुतस्तु अज्ञानपटल-निवृत्तौ प्रकाशरूपस्यात्मनः सुखस्वरूपतैव।

चन्दन०—*सच्चम् २, तओ किं णाम सरस्सुतीए कहियम्।

शिवप्र०—किं नाम तया कथितम्, सत्यमित्युक्त्वा सगद्गदया तया श्रीशङ्करस्य पादयोर्निपत्य—भगवन् जगद्गुरो! क्षमस्व ममापराधम्, मानुषीं तनुमापन्नया मयाऽज्ञानान्नैवावगतः, भवांस्तु साक्षाच्छङ्कर एव। अनुगृह्णीष्व माम्, भवतामनुकम्पातः शापान्मुक्तास्मीत्युक्त्वा सर्वेषाम-स्माकं समक्षमेवोड्डीय गता।

चन्दन०—†अच्चरियं २—जं कलिकालम्मि वि एरिसं जायं। महाणुभाय! सरस्सुतीए केण कुदो वा सावो दिण्णो।

शिवप्र०—विदितमेतत्खलु, यत्पुरा विबुधपरिषदि वेदं पठन्त-मुदात्तानुदात्तस्थानेषु स्खलद्गतिं दुर्वाससमवलोक्य सरस्वत्यहसत्। ततः सुलभकोपेन दुर्वाससा मानुषी भवेति शप्ता सा विमनस्का जाता।

चन्दन०—‡तदो २,

शिवप्र०—ततोऽनुनयविनयादिभिरुपशमितो दुर्वासा 'गर्वान्ते मोक्षः' इत्युक्त्वाऽगच्छत्। ततः कतिचिज्जन्मानन्तरं शंकरावतारेण जगद्गुरुणा श्रीशंकरेण पराजिता विध्वस्तगर्वा मानुषीं तनुमुन्मुच्य गता।

---

* सत्यम् २, ततः किं नाम सरस्वत्या कथितम्।

† आश्चर्यम् २, यत्कलिकालेऽपि ईदृशं जातम्, महानुभाव! सरस्वत्यै केन कुतो वा शापो दत्तः।

‡ ततस्ततः।

चन्दन०—*जुत्तं ति ।

( ततः श्रूयते ढक्काशब्दः )

शिवप्र०—( सचकितम् ) पश्य पश्य । मण्डनमिश्रपद्मपादादिशिष्यसहितो दिग्विजयप्रस्तुतः श्रीशंकर उज्जयिनीं जिगमिषतीत्यस्माभिरपि तत्रैव गन्तव्यम् । ( इति करण्डिकां दधानौ त्वरितत्वरितं गच्छतः । )

पटोन्नयनम्

( ततः प्रविशति उज्जयिन्यां मण्डनमिश्रपद्मपादादिशिष्यैरनुगम्यमानो विपक्षहृदि विक्षोभमुत्पादयन् शंकर इव श्रीशङ्कराचार्य्यः । )

शंकरः—( इतस्ततोऽवलोकयन् )

ताथागतानां वचनानि लोकेष्वापाततो यान्यतिशोभनानि ।
तान्येव मत्वा श्रुतिभिन्नवादैर्भ्रान्तैरमीभिः क्व नु गम्यते द्राक् ॥१॥

( विचिन्त्य ) आम्, ज्ञातम्—उज्जयिनीप्रान्ताधिपतिना सुधन्वना राज्ञा सर्वान् दार्शनिकान् राज्ञश्चाहूय सद्धर्मप्रचारेणैकमत्यस्थापनाय महती परिषत्कारिता । अस्माभिरपि तत्रैव गन्तव्यम् । ( परिक्रम्य ) इयं परिषद्भूमिः ।

पद्मपादः—भो आचार्याः ! विलोकयन्त्वत्र भगवन्तो भवन्तः—

मायाम्लुसतानुयायिनिवहो व्याप्य स्थितः सर्वतो
धत्ते मौनमसावकुण्ठितहृदामाशाम्बराणां गणः ।
एते जैनविकल्पगौरवसना वक्तुं किमप्युन्मुखा-
श्चार्वाकाः सकलानिमान्परिहसन्त्यन्योन्यतालान्विताः ॥२॥

( अन्यतः सर्वे परिक्रामन्ति । )

मण्डनः—पश्यन्तु गुरवः—

---

* युक्तमिति ।

वैशेषिकस्तर्कशतैः समस्तान्मूकीकरोत्येष विवादविज्ञान् ।
नैयायिकादत्तकरावलम्बं न कोऽपि तं वारयितुं समर्थः ॥३॥

पुनस्तृतीयः शिष्यः—

मीमांसकोऽयमखिलानपि सूक्तिसंघे
संघीकरोति निगमार्थविचारदक्षः ।
किन्त्वेष हास्यपरिमिश्रितभाषणेन
न्यक्कारितोऽतिकपटान्वितनास्तिकेन ॥४॥

तुरीयः शिष्यः—पश्यन्तु गुरवः—

अदृष्टसिद्धौ विनिविष्टबुद्धिर्घर्मोदकैराप्लुतसर्वदेहः ।
कुयुक्तिवादैरुपहास्यमानो मीमांसकोऽसाववसीदतीव ॥ ५ ॥

सशिष्यः शंकरः—( पुनः किञ्चित्परिक्रम्य ) इदमस्मद्योग्यं स्थानम् ।
( इत्युपविशन्ति शङ्कराचार्याः, पद्मपादादयः शिष्याश्च । )

चार्वाकः—( विलोक्य )

सभामध्ये याताः किमिह लगुडीकम्बलधरा
न गोपानां गोष्ठी कलहरसिकानां व्रजत रे ।
चरन्तीः स्वाः स्वा गा मृगयत वने शष्पजटिले

शङ्करः—चिदानन्दे मार्गे गमयितुमितो नास्तिकपशून् ॥६॥

( ततो विलक्ष इव संजातश्चार्वाकः । )

( ततो राजाज्ञासमुपस्थितौ मागधौ सर्वान् राजोद्देश्यं श्रावयतः—)

प्रथमः—बौद्धार्हद्गौतमाद्याः स्वमतिपटुतयाऽन्योन्यमालोचयन्ते
कौला लौकायतास्तान् बहुतरमनिशं हेलयन्तो हसन्ति ।

तत्तच्छक्तैर्विवादाकुलितसुहृदयैर्घोरवैरायमाणैः
शान्तिं भित्त्वा व्रजद्भिर्विहितमिव रिपोः क्रान्तियोग्यं स्थलं नः ॥७॥

किञ्च—अन्योन्यं भेदभावादिह हि बहुतराः प्रत्यहं जायमानाः
सिद्धान्तास्तेन लोकाः कलहमपरतः संचरन्तश्चरन्ति ।
तस्माद्वैरप्रभावाद्विगलितघृतना नष्टसौहार्दभावाः
सर्वे सिद्धान्तसिद्धे स्वपरगतभिदश्चैकमत्ये व्रजेयुः ॥८॥

द्वितीयः—दुराग्रहनिवृत्त्यर्थं वीरैः क्षत्रियवंशजैः ।
ऐकमत्यं स्थिरीकर्तुं सर्वैः शस्त्रं समुद्धृतम् ॥९॥

किञ्च—स्वपक्षमास्थापयतान्यपक्षे दोषानुपाहृत्य सुयुक्तिवादैः ।
स्वकीयसिद्धान्तगदोषलेशं मूलात्समूलं च निराकुरुध्वम् ॥१०॥

अपि च—सावधाना वयं सर्वे पक्षपातविवर्जिताः ।
शृणुमो युक्तियुक्तस्य मतस्य ग्रहणे दृढाः ॥११॥

( बौद्धचार्वाकादयो राजाभिमुखं पश्यतः । )

बौद्धः—मध्यस्थः को भवेन्नः ?

सुधन्वराजा—सहृदयजनता पक्षपाताद्विहीना,

चार्वाकः—वक्तव्यो निर्णयः कैः ?

राजा—उभयगतवचोयुक्तियुक्तैर्भवद्भिः ।

यौष्माकीणैर्मनोभिर्नयनमुखगतैश्चापि दुःखप्रमोदै-
रन्यैः सामाजिकाद्यैर्निरसितकलुषैः कोविदैरस्मकाभिः ॥१२॥

( ततः प्रविशन्ति परस्परं विवदमाना वैश्यवर्गसमन्विता मणिदासमोतीचन्द्रादयो नगरश्रेष्ठिनश्च । )

मणि०—*अहो ! जंगमजुअप्पहाणो सव्वण्णूवदिट्ठमग्गावलम्वी अम्हाणं गुरू इहक्खु चिट्ठइ, तेण सव्वे वाइणो पडिबोहिय जिणमग्गम्मि पावइयव्वा ।

मोती०—†को क्खु परकायपवेसाइविज्जाकुसलस्स आगासगामित्ताइप्पहावजुत्तस्स वायतक्कणकोवियस्स मणुस्ससरीरावइण्णस्स संकररूवधारिणो संकरस्स समक्खं ठाउं पहवइ, जेण दिगन्तपक्खायकित्तीओ सयलणिगमागमणिण्हाया मंडणमिस्सादओ मणीसिणो विजिय सिस्सत्तं पाविया । तेहिं व्व इहहि संसारे ण कोवि विवइउं सक्को । को क्खु तक्कसुण्णो वराओ तुम्हाणं गुरू ।

अपरः श्रेष्ठी—‡विहप्फइसरिसस्स विहप्फइमयाणुगामिणो तक्कसमक्खं सव्वे वि मोणावलम्विणो होहिस्संति ।

अन्यः—×णहि णहि । बुद्धसिस्साओ इहक्खु बुद्धसरूवा एव्व चिट्ठन्ति । तेहिं सव्वे वि पराइयव्वा ।

( इति परस्परं कलहायन्ते । ततः )

मन्त्री—( उत्थाय सर्वान् प्रतिबोध्य च ) .

---

* अहो ! जंगमयुगप्रधानः सर्वज्ञोपदिष्टमार्गावलम्बी अस्माकं गुरुः इह खलु तिष्ठति । तेन सर्वे वादिनः प्रतिबोध्य जैनमार्गे प्रापयितव्याः ।

† कः खलु परकायप्रवेशादिविद्याकुशलस्य आकाशगामित्वादिप्रभावयुक्तस्य वादतर्कणकोविदस्य मनुष्यशरीरावतीर्णस्य शंकररूपधारिणः शङ्करस्य समक्षं स्थातुं प्रभवति ? येन दिगन्तप्रख्यातकीर्तयः सकलनिगमागमनिष्णाता मण्डनमिश्रादयो मनीषिणो विजित्य शिष्यत्वं प्रापिताः । तैरेव इहहि संसारे न कोऽपि विवदितुं शक्तः, कः खलु तर्कशून्यो वराको युष्माकं गुरुः ? ।

‡ बृहस्पतिसदृशस्य बृहस्पतिमतानुगामिनस्तर्कसमक्षं सर्वेऽपि मौनावलम्बिनो भविष्यन्ति ।

× नहि नहि, बुद्धशिष्या इह खलु बुद्धस्वरूपा एव तिष्ठन्ति । तैः सर्व्वेऽपि पराजेतव्याः ।

भो भो सभ्याः सावधाना भवन्तः शृण्वन्त्वेतद् दुर्ग्रहं स्वं विमुच्य।
प्रौढं पक्षं दुर्निवारं विपक्षैः स्वैः सिद्धान्तैश्चाविरुद्धं लभन्ताम् ॥१३॥

एवं चास्मङ्कारते भारतीशे सौख्यस्थाने धैर्यशौर्यादियुक्ते।
सर्वे मर्त्या भेदभावं विहाय स्वान्तादेकीभावमेवोपयान्तु ॥१४॥

( ततो यथास्थानमुपविशन्ति सर्वे। )

मन्त्री—क्रियतां पूर्वपक्षः, एकस्मिन् समये एक एव वदेत्, अपरे तटस्थाः शृण्वन्तु। ( ततः )

चार्वाकः—

न स्वर्गो नापि मोक्षो न भवति निरयो नापि पुण्यं न पापं
नो जीवास्तद्गुणा वा कथमिव गुणिनो भिन्नभावाद् भवेयुः।
प्रत्यक्षाच्चातिरिक्तं न किमपि भवतां जायतेऽभीष्टसिद्ध्यै
यस्माद्बाधादिदोषाकलितमनुमतं ज्ञायते स्पष्टमेतत् ॥१५॥

किञ्च—शब्दः प्रमाणं, सच कस्य शब्दः ?

शिष्टस्य चेत्, कोऽस्ति जगत्यशिष्टः ?।
असत्यवाक् तस्य विनिश्चयः स्यात्
केनेति सर्वत्र विवादवार्ता ॥१६॥

अपरश्चार्वाकः—साधु साधु !! इदमपि प्रष्टव्यम्—

जातिः सातिशया कथं ? कथमहो देहेन सा संगता ?
हाऽस्पृश्यापि कथं भवेदभिमता ? सा जन्मना जायते।
यद्वा कर्मकलापतोऽप्यभिमता हास्यास्पदं सर्वतो
विद्वद्भिर्नहि देहिनां प्रकटितो भेदः कदाचित्क्वचित् ॥१७॥

इदमपि वक्तव्यम्—मद इव खलु देही जायते भूतसंघात्
चलति वदति भुङ्क्ते सर्वमेतद् घटीवत् ।
जननमरणवार्ता तूपचारप्रयुक्ता
प्रभवति नहि जीवो भूतसंघाद्विभिन्नः ॥१८॥

अपिच—

न कोऽपि हन्ता न च हन्यमानो विलोक्यते स्थूलशरीरभिन्नः ।
सूक्ष्मो न केनापि विलोकितोऽस्ति न चानुमा धावति हेतुशून्या ॥१९॥

तत इदमायातम्—

पिबत खादत दृष्टिपथस्थितं विचलितं न हि ते पुनरागतम् ।
अहह पश्यत साधुविभीषिकापदमविज्ञजनैर्बहुधेरितम् ॥२०॥

किञ्च—रमध्वं स्वच्छन्दं पिबत मधुवन्मद्यमभितः,
सदा मांसं भुङ्ग्ध्वं भवति न हि दोषः क्वचिदपि ।
दृशः पारे यातं जगति तव नास्तीति विदुषां
प्रगाढं संजातं सुबुधजनतानिश्चितमहो ॥२१॥

अपरश्चार्वाकः—साधु साधु, इदमप्येवं वक्तव्यम्—

न सिन्धुमध्ये न च चन्द्रमण्डले न चामृतं तिष्ठति देवपत्तने ।
किन्त्वेतदिष्टं रमणीमुखेऽथवा मांसस्य खण्डे विधिवत्सुपाचिते ॥२२॥

अपरः मांसाशी—*णहि क्खु मंसभक्खणे कावि विप्पडिवत्ती ।
†जहेव पिट्ठं खु तहेव मंसं जहा जवा चेव तहेव मच्छा ।
जवस्स भक्खे णहि दोसलेसो मच्छाइभक्खे क्खु कहं णु दोसो ॥२३॥

* नहि खलु मांसभक्षणे काऽपि विप्रतिपत्तिः ।

† यथैव पिष्टं खलु तथैव मांसंयथा यवाश्चैव तथैव मत्स्याः ।
यवस्य भक्षे नहि दोषलेशो मत्स्यादिभक्षे खलु कथं नु दोषः ॥२३॥

अपिच—*मणुस्सा पयडीए य मंसभक्खणहेउगा ।
तत्थ दोसस्स का चचा सीओ वरही कहंणु वा ॥२४॥

संसारमोचकः—†णाणाइ सुरणे णहि जीवगंधो
भुंजे पसूणं ण हि तत्थ दोसो ।
अएणाणिणो हिंसणगं पि पुरणं
मंसं चरंतोवि चरेम्ह धम्मं ॥२५॥

किंच—‡ण भक्खणीयम्मिय मंसखंडे
वियारणीयं खु जहेव सागे ।
ण सकुली भक्खणगे वियारो
पवट्टते ते महुरप्पियस्स ॥२६॥

शंक०—भो भो सभ्या वादिनश्च दत्तावधानाः शृणुत ।
स्वर्गसत्ता हि चार्वाकैरुक्ता सा नैव युज्यते ।
श्रुत्वा भवद्भिरन्यैश्च युक्तियुक्तं प्रमीयताम् ॥२७॥
स्वर्गो न चेत्तस्य कथं प्रसिद्धिः,

चार्वाकः—प्रसिद्धितः सिध्यतु चेन्नु सत्ता ।
भवेत्ततश्चाम्बरपुष्पसत्ता स्युरुष्ट्रशृङ्गाएयपि कार्यभाञ्जि॥२८॥

---

* मनुष्याः प्रकृत्यैव च मांसभक्षणहेतुकाः ।
तत्र दोषस्य का चर्चा शीतो वह्निः कथंनु वा ॥२४॥

† ज्ञानादिशून्ये नहि जीवगन्धो भुञ्जे पशून् नहि तत्र दोषः ।
अज्ञानिनो हिंसनकमपि पुण्यं मांसं चरन्तोऽपि चरामो धर्मम् ॥२५॥

‡ न भक्षणीये च मांसखंडे विचारणीयं खलु यथैव शाके ।
न शष्कुलीभक्षणके विचारः प्रवर्तते ते मधुरप्रियस्य ॥२६॥

T

शंकरः—

उष्ट्रो न सिद्धः किमुवा न शृङ्गं सम्बन्ध एवात्र यतोऽप्रसिद्धः।
पदार्थसिद्धौ कथमेष शक्यस्त्वयेति सम्यक् सुविचारणीयम् ॥२९॥

सम्बन्ध एवात्र गतप्रसिद्धिः सम्बन्धतो नैव पदार्थसिद्धिः।
यथा च स्वर्गो न तथा खपुष्पं समासतः पश्यसि किन्तु भेदम् ॥३०॥

किञ्च—जीवोऽप्येवं स्वसत्तैव सिध्यत्येवेति बुध्यताम्।
जीवस्वर्गादयोऽदृष्टा भासन्ते शब्दसत्तया ॥३१॥

चार्वाकः—(क्रुद्धः सन्) आः! किमनर्थं प्रजल्पसि, शृणु—आत्मा-जीव-इत्यादिशब्दानामपि प्रसिद्धिः खपुष्पतुल्यैव। यथा खमिति पुष्पमिति च पदद्वयेन खपुष्पमित्यस्य प्रसिद्धिः, एवमिहापि अत् इति धातुः, मनिण्-प्रत्ययश्चेति प्रकृतिप्रत्ययेन आत्मा इत्यस्य प्रसिद्धिः। अततीति आत्मा, जीवतीति जीवः—सर्वमेतत्खपुष्पवत्प्रसिद्धम्; न वास्तविकम्।

शंकरः—(किंचित्स्मित्वा)

भानौ प्रक्षेपतो धूलेर्न तिरोधीयते तु सः।
किन्तु प्रक्षेप्तुरेवैवं मुखम्लानिः प्रजायते ॥३२॥
शब्दद्वयं खपुष्पेऽस्ति जीवशब्दे तु चान्यथा।
एवमात्मप्रयोगोऽपि ज्ञायतां घटशब्दवत् ॥३३॥

अपिच—न तिष्ठति प्रत्यय एव केवलो न वापि चास्ते प्रकृतिश्च केवला।
मनिण् क्व दृष्टः क्व च वाऽप्यतिस्त्वया पृथक् पृथक् प्रत्ययधात्वसंगतौ।३४

तस्मान्न चात्मास्ति खपुष्पतुल्यस्तुल्यो घटादेश्च परप्रमाणम्।
सिद्धे पदार्थे कथमात्मनि त्वं वादस्पृहां नैव शमीकरोषि ॥३५॥

अन्यच्च—पृथिव्यादिभूतसंघादात्मसमुत्पत्तिस्वीकारे—

चैतन्यतांशं च कुतः प्रभूतं ज्ञानाश्रयत्वं वद तेषु कुत्र ।
चार्वा०—मदो यथा याति जवादिसंघात्
शंकरः—जवेऽप्यनुद्भूततमो मदोऽस्ति ।

किञ्च—अविनाभावसंबन्धो मन्यते व्यक्तिशब्दयोः ।
जीवादिशब्दसत्त्वे च व्यक्तिरस्तीति मन्यताम् ॥३६॥

चार्वाकः—सर्वथा जीवासत्त्वं नैव मन्यतेऽस्माभिः; किन्तु जन्मान्तरीयपुण्यपापादृष्टसहितसमागतजीवाभाव एवोच्यते, तदंशे एव 'नो जीवा' इत्यस्य तात्पर्यात् ।

सच—भूतानां समुदायतः प्रभवति ज्ञानाश्रितं यत्स्वत-
स्तज्जीवेत्यभिधीयते न हि परादेहाच्च संगच्छते ।
शंकरः—एवं चेज्जननादनन्तरमसौ दुःखी सुखी वा कथं ?
स्तन्यस्य ग्रहणे प्रवृत्तिरपि नो स्यादस्य जाते स्वतः ॥३७॥

चार्वाकः—स्वभावाज्जायते स्तन्ये प्रवृत्तिर्ज्वलनौष्ण्यवत् ।
सुखदुःखादिकं चैव प्रातिकूल्यानुकूल्यतः ॥३८॥

किञ्च—गौरोऽहं चाकृशोऽहं यदिति मतमिदं तत्प्रवृत्तं स्वदेहे,
देहो मे येति बुद्धिर्भवति मतिमतां साऽपि राहोः शिरोवत् ।
धूमे धूमध्वजादेर्व्रजति गमकता याऽविनाभावतस्सा
तस्मात्सर्वानवद्यं मम मतमभितो धीधनैर्ज्ञेयमेतत् ॥३९॥

शंकरः—अविनाभावसम्बन्धो नानुमानेन भिद्यते ।
अन्वयव्यतिरेकेण निश्चयो यद् द्वयोः समः ॥४०॥

किञ्च—कार्यकारणतया प्रतिबोधः स्यान्नियामकवशात्प्रकृतेर्वा ।
दर्शनादनु च दर्शनतो वा स्यादयं तु नियमो ह्यविनाच्चे ॥४१॥

एवमेव स्वरूपोऽयमन्वयो मन्यते बुधैः।
अभावे व्यतिरेकः स्यात्तस्मात्सोऽनुमितेः समः ॥४२॥

अपि च—"नानुमानं प्रमाणम्, प्रकृतकरणतावच्छेदकीभूतधर्मशून्यत्वात्"—इति वदताऽकामेनापि भवताऽनुमानं प्रमाणं स्वीकृतम्, हेतोरुपन्यासात्। हेत्वनुपन्यासे च न हि प्रतिज्ञामात्रेण किञ्चित्साधयितुं पार्यते।

अन्यच्च—'गतोऽस्तमर्कः' इत्यादौ बोद्‌धृभेदतया सन्ध्योपासनाभिसरणस्तैन्यकर्मादिसमयप्रतिबोधः कथं स्यात्? भवन्नयेऽनुमानव्यञ्जनयोरभावात्, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाच्च।

अपि च—परगता विप्रतिपत्तिश्च हेतुभूतवचनेनैवानुमीयते, इत्यतोऽपि अनुमानं प्रमाणमङ्गीकर्तव्यम्।

किञ्च—जीवंश्चैत्रो गृहे नास्तीत्यादौ चैत्रस्य बहिः सत्त्वं कथं ज्ञायेत? वाक्यस्याभावे पर्यवसानात्। प्रत्यक्षप्रमाणतया बहिः सत्त्वस्यानिश्चयात्, अनुमानार्थापत्त्योर्भवद्भिरस्वीकाराच्च। नापि जीवन्निति पदेन बहिः सत्त्वं ज्ञातुं शक्यते, विरुद्धयोर्भावाभावयोर्यौगपद्येन ज्ञातुमयोगात्—इत्यगतिकगतेस्तदवगमायानुमानं प्रमाणमङ्गीकार्यम्। इति सिद्धमनुमानस्य प्रामाण्यम्।

(ततस्तूष्णीं स्थितश्चार्वाकः।)

राजाज्ञया वैतालिकः—

चार्वाको विजितोऽनेन शङ्करेण महात्मना।
ततः सहानुगैर्जातश्चार्वाकः शाङ्करं मतम् ॥४३॥

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधिमथुराप्रसाददीक्षितकृतौ शङ्करविजयनाटके तृतीयोऽङ्कः।

T

# चतुर्थोऽङ्कः

( तत आर्हतमतावलम्बी स्वकीयसंघसंयुक्तः स्वमतप्रधानसंचालकः कश्चित्सूरि-रुपतिष्ठते । )

सूरिः—स्वर्गोऽस्त्यत्र न काऽपि भेदधिषणाऽस्माकं वरीवृत्यते
किन्तु व्याप्य शरीरमात्रमभितो जीवोऽत्र संतिष्ठते ।
सर्वज्ञोक्तवचः प्रमाणमखिलं षड्भेदिकायामितं
जीवाजीवयुगात्मकं जगदिदं स्याद्वादमुद्राङ्कितम् ॥१॥

शङ्करः—कथं नाम अजीवात्मकं संसारमवतिष्ठते ? सर्वमपीदं कपाट-कुड्यादिकं यदवलोक्यते तद् वृक्षपृथिव्यादेरेव विकृतिभूतम् ।

सूरिः—ननु इदानीं तु अजीवात्मकमेव ।

शङ्करः—जीवात्मकस्यैव तस्य जीवांशलये अजीवात्मकं मन्यते । वास्तविकविचारे सर्वमपि ब्रह्मस्वरूपेणैव तिष्ठति, 'सर्वं खल्विदं ब्रह्म' 'नेह नानास्ति किञ्चन' इति तदैक्यमारम्भिकं बोधयति ।

सूरिः—तदात्मकत्वेऽपि इदानीं प्रत्यक्षतो दृश्यमानं कपाटकुड्यादीना-मजीवात्मकत्वं केन निह्नोतुं शक्यते ? अपि च वास्तविकतया सर्वमपि सप्तभङ्ग्यात्मकमेव ।

तच्चेदम्—

स्यादस्ति नास्तीति पुनर्द्वयं स्यादवाच्यतः सिध्यति सप्तभङ्गी ।
प्रत्येकतो योजनया जयन्ती सर्वत्र सा कुट्टति वाददकाम् ॥२॥

किंच—जीवाजीवौ निर्जरा बन्धमोक्षौ राजत्येवं संवरोऽप्याश्रवश्च ।
सप्तैवैवं सन्ति तत्त्वानि लोके सर्वज्ञोक्तं चैतदस्त्यप्रपञ्चम्॥३॥

( अथान्तरा कश्चित् सूरिमुद्दिश्य—)

को धर्मः केशलोचे प्रभवति भवतो भिक्षणे वा विरागे,
त्यागे वा कामिनीनां कथय कथमहो नैव विश्वासघातः।
यातो वा किल्बिषाणां सरणिमपि यतो मुच्यते वेदमार्गः,
सूत्रैर्भारः श्रुतीनां भवति न वदतः क्व प्रयाता मतिस्ते ॥४॥

सूरिः—( साटोपम् )

न केशलोचे यदि धर्ममार्गो विनाशने प्राणिकुलस्य किं स्यात्।
अहो कथं घातुकधूर्तवाक्ये प्रमाणता स्वीक्रियते त्वयैव ॥५॥

किञ्च—

अथास्ति यागे निहतोऽपि जन्तुः स्वर्गं प्रयात्येष विनिश्चयस्ते।
निहत्य बन्धून् गमयेः कथं न पश्यन्तु हा दम्भपथं महान्तः ॥६॥

शङ्करः—( सूरिमुद्दिश्य ) भो महाभाग ! केन घातुकधूर्तवाक्येषु प्रामाण्यं स्वीक्रियते, कानि च तद्वाक्यानि ?

सूरिः—भवद्भिरेव तेषु प्रामाण्यं स्वीक्रियते, वेदा एव तद्वाक्यानि।

शंकरः—वेदा अपौरुषेयाः, पुरुषेष्वेव घातुकत्वधूर्तत्वादिसंबन्धः, वेदानां पुरुषकृतत्वाभावात्।

सूरिः—ताल्वादिसंयोगवशेन शब्दा भवन्ति तेषां प्रचयोऽस्ति वेदः।
अथापि न स्यात् पुरुषप्रणीतो वन्ध्यासुतादस्ति न चास्य भेदः॥७॥

शङ्करः—( किञ्चित्स्मित्वा )

उच्चारणे कारणमस्तु योगस्ताल्वादिभिर्नैव कृतौ स हेतुः।
अपौरुषीं तां कृतिमेव तेषां भ्रमोऽत्र का विप्रतिपत्तिरस्ति ॥८॥
उच्चारणं चेन्नु सकर्तृकं स्यान्नैतावता निर्मितिसिद्धिरस्ति।
शास्त्रं पठन्तोऽपि भवन्त एव निर्मापका नैव भवन्ति तस्य ॥९॥

( अथ कश्चित् किंचिद्विवक्तुरिव ओष्ठस्पन्दनं करोति । )

मन्त्री—क्षणं विरम्यताम्, श्रूयतां च । एतयोर्वादनिर्णयानन्तरमेव वक्तव्यम् ।

श्रीस्वामिन् महाराज ! प्रकृतमनुष्ठीयताम् ।

( ततोऽन्तरा प्रविशति स्वशिष्यपरिवृतो बौद्धाचार्यः, यथास्थानमुपविशति च )

शङ्करः—ऋषिस्तु मन्त्रं समुपैति चात्र स्यान्निर्णयः स्वप्ननिदर्शनेन ।
स्वप्नं यथा पश्यति नो विधत्ते लोकस्तथर्षिर्न करोति वेदम् ।१०।

अपिच—न कस्यचित्कर्तृतया प्रसिद्धिं सन्तो भवन्तोऽपि विलोकयन्ति ।
ऋषेः परं द्रष्टृतया प्रसिद्धेरपौरुषी तिष्ठति वेदसत्ता ॥११॥

एवञ्च—द्रष्टारो निगमस्य तेऽपि तपसा याता वशिष्ठादयः
पूर्वेषां व्यवहारतो गतमिदं नैतत्कथं मन्यते ।
आम्रोऽयं कलशोऽयमेव च पटोऽत्रांशे प्रमाणं त्वया
किं वाच्यं व्यवहार इत्यविमतौ त्वत्रापि तन्मन्यताम् ॥१२॥

सूरिः—ननु पुराणादौ कमलसमुद्भूतस्य चतुर्मुखब्रह्मणो वेदकर्तृतया प्रसिद्धिरस्त्येवेति कथमपौरुषेयता ?

शङ्करः—शृणु पुराणेषु हृत्कमलविकाशसमुद्भूतेन ब्रह्मरूपेणात्मना यदापाततः प्रतिपादनं तदेवं लोकरोचनाय ब्रह्मकर्तृतया प्रतिपादितम्, नतु ब्रह्मणो विष्णुसूनुत्वमिति वास्तविकम् ।

सूरिः—किं पुराणेषु अवास्तविकमपि ?

शङ्करः—पुराणेषु अर्थवादपूर्वकवस्तुप्रतिपादनाद् वस्तुनो वास्तविकत्वेऽपि प्रकारस्य, तत्कार्ये प्ररोचनाय प्रतिपादितस्यार्थवादस्य, पुरञ्जनाद्युपाख्यानादीनां च अवास्तविकत्वमेव ।

सूरिः—नन्वेवं पुराणमप्रमाणं स्यात् ?

  

शङ्करः—हन्त ! कथं नावगतम्, पुराणोक्तं विधेयं सर्वमेव वस्तु प्रमाणम्, प्रकारस्त्वर्थवादपूर्वकतया प्रतिपादित इति मित्रोपदेशवत्कार्यांशे प्रमाणमेव। सर्वाण्यपि पुराणानि वेदानुकूलान्येवेति वेदवत्तेषां प्रामाण्यम्।

सूरिः—नन्वेवमपि विष्णोः कथमिव ब्रह्मण उत्पत्तिः ?

शङ्करः—व्यापकतपसो ब्रह्मभूतस्यात्मनः प्रतिपादनात् लोकरोचकतया तथा प्रतिपादितः। एवं च ब्रह्मभूतस्य तज्जीवात्मनः सर्वतोमुखत्वाच्चतुर्मुखत्वमपि प्ररोचनपरमेवेति न विरुध्यते।

( सूरिरधोमुखः किञ्चिद्विमृश्य शङ्कराचार्यचरणकमलं प्रणम्य श्रोगामुखपत्रिकांच प्रक्षिप्य समुत्थाय तदन्तेवासित्वेन तिष्ठति। )

शंकरः—पुनः ( दिगम्बरपक्षावलम्बिनमुद्दिश्य ) भो भो वादिनः ! युष्माकं सप्तभङ्ग्यपि युगपद्भावाभावयोरेकत्रानवस्थानान्नावतिष्ठते, न खलु घटे घटाभावः प्रत्येतुं शक्यते।

दिगम्बरपक्षा०—आः ! कोऽयमाग्रहः, ननु यथा घटे घटपर्यायाणामवस्थानम्, एवं घटे पटपर्यायाणामनवस्थानमपीति भावाभावौ घटे वर्तेते एव।

शंकरः—नैतद् युज्यते।

यतः—घटे घटत्वं यदि वर्तते चेत् पटत्वशङ्कापि घटे कथं स्यात्।
अथापि चेत्सर्वपदार्थरोधे शृङ्गग्रहेणैव निवर्त्यतां तत् ॥१३॥

दिगम्ब०—नन्वेतदिष्टम्।

शङ्करः—न पदार्थबोधं कस्यापि वा पारयितुं समर्थः।
किञ्चेह भावोऽपि भवेदभावो मूर्खग्रहे तिष्ठति नान्तरात्मा ॥१४॥

दिगं०—ननु सर्वज्ञ एव घटं घटपर्यायेण पटाभावपर्यायेण च जानाति;

न त्वितरः । तथा च आगमः * "जेये गं जाणइ से सव्वं जाणइ—जे सव्वं जाणइ से एगं जाणइ" । उक्तं च—

एको भावः सर्वथा येन दृष्टः सर्वे भावाः सर्वथा तेन दृष्टाः ।
सर्वे भावाः सर्वथा येन दृष्टा एको भावः सर्वथा तेन दृष्टः ॥१५॥

शंकरः—नैतद् युज्यते, यतोहि यदेव ज्ञातुमाकाङ्क्षते तदेव जानाति, न त्वन्यत् । न खलु घटज्ञाने प्रकारविधया भासमानाद् घटादन्यज्ज्ञातुं प्रभवति । अनाकाङ्क्षितानां घटपर्यायाणां ब्रह्माण्डान्तर्वर्तिसकलवस्तुपर्यायाणां च युगपदुपस्थितौ कस्यापि बोधो न स्यात् ।

( दिगम्बरः किञ्चिद्विमृशन्निवाधोमुखस्तिष्ठति । )

शंकरः—किञ्च मोक्षोऽपि बन्धाभाव एवेत्यभावरूपत्वान्न तस्य पदार्थत्वम् ।

यतः—कर्मक्षयो वाऽऽवरणक्षयो वा विनाशनं ध्वान्तपटस्य वा स्यात् ।
तत्त्वं न चास्मात्प्रतिभाति यस्मादभावतो भावविधिः प्रयाति।१६।

दिग०—भगवन् ! सर्वमपि भवदुक्तं प्रमाणम् । (इत्युक्त्वा समुत्थाय च)

वेदोक्तं सकलं प्रमाणमभितः स्वान्ते स्वयं भासते
चेतश्चारुचमत्कृतिं वितनुते काम्यपूर्वामिमाम् ।
मोहो मे विगतश्चराचरजगद् ब्रह्मानले लीयते,
शिष्योऽहं प्रतिपालय स्वशरणायातं सदा शंकर ! ॥१७॥

( इति श्रावयन् पादयोः पतति । )

शङ्करः—( उत्थाप्य ) ब्रह्मामृतं लभस्व । ( इति सप्रेम पृष्ठे परामृशति । )

वैतालिकः—अत्र स्थिताश्च निखिला दुराग्रहविवर्जिताः ।
जैनाः संघसमायाताः शांकरं मतमाश्रिताः ॥१८॥

* य एकं जानाति स सर्वं जानाति, यः सर्वं जानाति स एकं जानाति ।

राजमन्त्री—सभ्याः! महाराजस्य स्वाभिमतस्योपासनावसरः संवृत्त, इत्यनुजानीत क्षणं विश्रमितुम्।

सर्वे सभ्याः—अवश्यम्।

( ततः सर्वे समुत्थाय निष्क्रामन्ति। )

पटाक्षेपः

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधिमथुराप्रसाददीक्षित-कृतौ शङ्करविजयनाटके चतुर्थोऽङ्कः।



T

# पञ्चमोऽङ्कः

## पटोन्नयनम्

( ततः प्रविशत्येकतः स्वशिष्यसहितः श्रेष्ठिभिः परिवृतो बौद्धाचार्यः, अपरतश्च पद्मपादादिसहितः शङ्करस्तदनु राजानश्च । यथास्थानं सर्वे उपविशन्ति । )

बौद्धाचार्यः—( मनसि )

वादे कौशल्यसम्पन्नं दृष्ट्वैनं वेपते मनः ।
मन्ये सर्वयशोराशिरस्य स्वामी भविष्यति ॥१॥

शंकरः—( सस्मितम् )

ओष्ठस्फुरणतः किञ्चिद्विवक्षुरिव बुध्यसे ।
संशयानः कथं भीत्या वेपसे किं न भाषसे ॥२॥

बौद्धभिक्षुः—( सक्रोधमिव )

आरेभे लौहधान्याशनमिह भवता दन्तहीनेन नूनं
प्रोद्यज्ज्वालास्फुलिङ्गद्रढिमतनुरुचालिङ्गने साहसं वा ।
क्रोधारक्तेक्षणास्यं द्विपमपहरतो वा मृगेन्द्राधिपस्यो-
द्धर्तुं दंष्ट्रां समीहा यदि मम मते वादवाञ्छां विधत्से ॥३॥

शङ्करशिष्यः—( साक्षेपम् )

रे ज्योतिरिङ्गण ! भवांस्तमसि प्रगाढे
प्रायो जडस्य सविधे कुरुतां विकाशम् ।
एतन्मतप्रखरभास्करभाप्रकाशे
नामापि ते न भवति क्व नु वादचर्चा ॥४॥

बौद्धभिक्षुः—(सिद्धान्तविचारं परिहरन्निव) आः ! कथमयमल्पज्ञोऽस्मदुक्तिं प्रत्युत्तरयितुं समर्थः स्यात् ।

दर्शका निष्पक्षाः सभ्याश्च—

अल्पज्ञो वापि सर्वज्ञः प्रश्नोत्तरविचारणे ।
स्फुटमेतत्प्रकटितं स्वयमेव भविष्यति ॥५॥

द्वित्रा बौद्धशिष्याः—सर्वज्ञकल्पस्यास्मद्गुरोः समक्षं नायं प्रभवति ।

केचिदपरे—अन्तःसारशून्यो भिक्षुसिद्धान्तः बाह्याडम्बरमात्रग्राही ।

मन्त्री—( उत्थाय ) यूयं कोलाहलं परिहरत । सर्वे मौनावलम्बिनो भवन्तु । सावधाना युक्तायुक्तविचारं विमृशन्तः शृण्वन्तु, युक्तिप्रमाणोपपन्नं पक्षं गृह्णन्तु च । बौद्धभिक्षो ! क्रियतां पूर्वपक्षः ।

बौद्धभिक्षुः—( शङ्कराचार्योन्मुखम् ) अयि महानुभावाः !

मुक्तो जीवः कथंकारं ब्रह्मण्येव प्रलीयते ।
ब्रह्मणः संभवत्वं चाऽऽस्थाप्यतां तत्सयुक्तिकम् ॥६॥

अपरो भिक्षुः—

भूभूभृद्भूरुहाद्यं सकलमपि जगत्कर्त्रनुत्पन्नरूपं
सच्चासच्चोभयं नोभयमथ च तथा शीर्यते चिन्त्यमानम् ।
सर्वं सद्भङ्गुरं च क्षणमपरमिदं नैव संतिष्ठते तत्
ज्ञानान्मोक्षः क्रियातो भवति मतिमतां नात्र कश्चिद्विकल्पः ॥७॥

शंकरः—अयि सभ्याः ! सहृदया बुद्धमतावलम्बिनश्च सर्वे सावधानाः शृण्वन्तु ।

यस्माद् यत्तु समुत्पन्नं तत्तस्मिन्नेव लीयते ।
यथाऽऽकाशे घटाकाशः क्षितौ च शकलं क्षितेः ॥८॥

किंच—प्राकृतिकस्वभाव एवायम्—यदिमे पृथिव्यादयः पदार्थाः

स्वांशभूतं शकलादिकमाकर्षन्ति। यथा वियति प्रक्षिप्ते घटिकाशकले पृथिवी तमाकर्षति। यथा वा तेजःसमुदायसमुद्भूतं तेजः ऊर्ध्वमेव धावति। एवमेव जीवोऽपि निरावरणः शुद्धः सन् तस्मिन्नेव निलीयते। तदंशभूतत्वं तु तत्कर्मभिः स्फुटमवगम्यते।

बौद्धभि०—अयि महाभाग! पार्थिवा घटिकाशकलादयो गुरुत्वादधः पतन्ति। वेगादुपरि प्रक्षिप्ता यावद्वेगमुपरि गच्छन्ति, तद्गतवेगसमाप्तावधः पतन्ति। अग्निपुञ्जस्तु लघुत्वादुपरि गच्छति।

शङ्करः—वेगादाकर्षणशक्तिर्मन्दीभूता। तद्गतवेगसमाप्तावाकृष्टैवाधो याति। अन्यथा उपर्येव तिष्ठेत्, एवमेव पक्वमाम्रफलमधः पतति, अनाकृष्टं तु तस्मिन्नेव वृन्ते तिष्ठेत्।

अन्यच्च—सर्वोऽपि जीवः स्वकमिच्छतीशं नित्यामरं चापि परावरज्ञम्।
निर्बाधनिर्भीतमतोऽनुमन्ये जीवस्तथाभूतगुणात्प्रभूतः ॥९॥

अयि विद्वांसः, पश्यन्तु भगवन्तो भवन्तः—यदयं सर्वोऽपि जीवः स्वप्रभुत्वमिच्छन्नेव यतते। संपन्नः प्रभुरपि ततोऽधिकमात्मानमिच्छतीति ज्ञायते। अस्ति कश्चित्सर्वप्रभुः, स्वयं स्वतन्त्रश्च। तत एव जीवः समुत्पन्नः तस्मिन्नेव निलेतुमभिलषति। एवमेव सर्वोऽपि मरणाद् बिभेति। ताडितः स्पृष्टो वा जन्तुर्मरणभीत्या पलायते। किं बहुना, म्रियमाणोऽपि मरणात् त्रस्यतीति ज्ञायते। अस्ति तदुत्पत्तेरमरस्थानम्, तदेवाभिलषन् यतते—इति निश्चीयते। स्वयंप्रभोः सच्चिदानन्दस्यैवांशो जीवः, तदेव ब्रह्मस्वरूपमभिलषमाणो धावति, पृथिवीजलतेजोवत्।

किंच—क्षपणक!

सर्वं समुत्पत्तिमुपैति कर्त्तुर्नाकर्तृकं किञ्चिदुदेति लोके।
यथा कुलालाच्च घटस्तथेदं भूभूरुहाद्यं सकलं समेति ॥१०॥

एवं जगतो जीवस्य च ब्रह्मकर्तृत्वं जीवानां च मुक्तौ तस्मिन् ब्रह्मणि लयः स्फुटमेव सिध्यति।

  

अथ स्वसिद्धान्तमपि तावत्किंचित्सूक्ष्मेक्षिकया विचारयत ।

यूयं बुद्धगुरोर्वचस्स्वपि धियैवान्योन्यभेदं गताः,
सर्वास्तित्वमुपागता अथ परे विज्ञानसत्त्वं श्रिताः ।
अन्ये सर्वपदार्थसार्थनिवहे शून्यत्ववादं धृताः,
किन्त्वेतत्सकलं विचारनिकषायातं स्वयं शीर्यते ॥११॥

अयि महाभागाः ! शृणुत, विचारयत च निष्पक्षपातम् ।

वाह्यमाभ्यन्तरं चैव भूतादिः स्कन्धहेतुकः ।
नोभयत्रापि संप्राप्तिश्चेतनस्याननुक्रमात् ॥१२॥
इतरेतरभावेनाविद्याद्युत्पत्तिमात्रतः ।
संघातोत्पत्तिहेतौ च नैतद्भवितुमर्हति ॥१३॥
पूर्वक्षणस्य च लये सोऽग्रे हेतुः कथं भवेत् ।
स्थायित्वे स्वागमच्छेदस्तत्त्वतस्तद्विचार्यताम् ॥१४॥
हेत्वभावेऽपि चेत्कार्यं चित्तचैत्तादिकं भवेत् ।
निर्हेतुत्वाविशेषेणोत्पत्तौ सर्वं समाकुलम् ॥१४॥

अपि च अथ प्रतिसंख्याप्रतिसंख्यानिरोधतोऽप्राप्तिरिति मतं चेत् ? तदपि न युक्तमविच्छेदादुभयथाऽपि च दोषसत्त्वाच्च ।

बौद्धः—अयि महानुभाव ! अस्तित्वेन क्षणिकत्वाभ्युपगमे द्रष्टृदृश्ययोरुभयोरपि क्षणिकत्वान्नानुपपत्तिः ।

शंकरः—( सस्मितम् ) एवं च अहं स्मरामीति प्रत्यय एव न स्यात्, क्षणिकतया बोद्धुर्नाशेन स्मर्तुरन्यत्वात् ।

बौद्धः—अयि महाभाग ! सदृशयोर्द्वयोः क्षणयोर्विषये विद्यमानस्य वस्तुनः सादृश्यात् “तदेवेदं भवतः कार्षापणम्-यन्मथुरायां गृहीतम्” इतिवत्सर्वत्र सादृश्यनिमित्तकमेव स्मरणमिति नोक्तदोषः ।

शंकरः—एवं च तत्सदृशमिति कदाचिदपि प्रत्ययः स्यात्। तदेवेदं भवतः कार्षापणमिति व्यवहारस्तु समानकार्यनिर्वाहकत्वादविरुद्धः।

अपि च—तथा सति एकस्यैव पूर्वोत्तरक्षणद्वयावस्थायित्वेन क्षणिकताभङ्गः।

बौद्धः—महाभाग!

यद् बीजाङ्कुरनाशनेन विटपी लोके समुत्पद्यते,
दुग्धस्यापि विनाशतो दधि तथा मृत्पिण्डनाशे घटः।
अन्यत्किं बहुनाऽत्र वस्तु सकलं नाशोत्तरं जायते,
मन्ये तेन समस्तवस्तुनिवहो नाशादसौ जृम्भते ॥१५॥

शंकरः—अयि महाभाग! सहृदय! विचारयतु तावद् भवान्। अभावाद् वस्तुसमुत्पत्तिस्वीकारे अङ्कुरनाशाद् विटपीव घटोऽपि किं न समुत्पद्येत, नाशस्याविशेषात्।

बौद्धः—स्वामिन् महाराज! अङ्कुरादीनां नाशादेव विटप्यादि समुत्पद्यते। इदं तु प्रत्यक्षमेव, अन्यथा भवन्मयेऽपि का गतिः स्यात्?

"यत्रोभयोः समो दोषः परिहारश्च तादृशः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥१६॥"

शंकरः—नैतद् युज्यते, न खल्वङ्कुरादीनां नाशाद् विटपी समुत्पद्यते, किन्तु तस्याङ्कुरस्तदाकारेण विवर्त्तते परिणमते। यथा आम्राङ्कुरः आम्रविटप्याकारेण परिणमति, अतएव आम्राङ्कुराद् आम्रविटपी समुत्पद्यते। यथा च मृत्पिण्डात् मृदो घटः, सुवर्णपिण्डाच्च सुवर्णघटः, इति नाभावाद् भावोत्पत्तिः।

किञ्च अभावाद् वस्तुसमुत्पत्तिस्वीकारे युगपदेव सर्वं समुत्पद्यमानं समाकुलं भवेत्, अभावस्याविशेषात्।

अपरो बौद्धः—अयि महाभाग! बुद्ध्यारूढेन रूपेण अन्तस्थ एव सर्वोऽपि प्रमाणप्रमेयादिफलव्यवहारः समुत्पद्यते। बाह्येऽर्थे सत्यपि

बुद्धयारोहमन्तरेण प्रमाणादिव्यवहारानवतारात्। नैतावता सर्वव्यवहारोऽन्तस्थ एव, न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति वक्तुं पार्यते, प्रत्यक्षतस्तथैवोपलम्भात्—इति।

शङ्करः—अयि विद्वन्! कोयं ते बाह्येऽर्थेऽभिनिवेशः? तत्र सर्वथा दोषोपलम्भात्। विचारयतु तावद् भवान्—सहि बाह्योऽर्थः परमाणुस्वरूपः? तत्समुदायः स्तम्भादिरूपो वा?।

न तावदाद्यः, परमाण्वाभासज्ञानानुपपत्तेः। नापि द्वितीयः, तस्य परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात्।

किंच—सामान्यं च समस्तवस्तुविषयज्ञानं यदुद्भासते,
तन्न स्वीयविशेषतां क्वचिदपि त्यक्त्वा समुज्जृम्भते।
तस्य स्वीकृतितश्च सर्वविषयाकारः स्वयं रुध्यते,
तद् बाह्यार्थमपार्थकं च विषयाभेदोऽपि यद् बाधते ॥१७॥

वस्तूपलब्ध्याऽपि न चोपलब्धिं स्वान्तापलापाद् यदि मन्यसे चेत्।
ततः कथं ते वचनादरः स्यात्, यतः प्रतार्योपि गतोऽनुभूतिम् ॥१८॥

बौद्धः—अयि महाभाग!

अर्थं विनापि ज्ञानस्य वैचित्र्यं परिकल्पितम्।
वासनाया विचित्रत्वादिति नैव विरुध्यते ॥१९॥

शङ्करः—न खलु भावो वासनानामुपपद्यते, त्वत्पक्षे बाह्यानामर्थानामनुपलब्धेः। अर्थोपलब्धिहेतुका हि प्रत्यर्थं नानारूपा वासना भवन्ति, अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता वासना भवेयुः? अनादिस्वीकारे त्वन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारलोपिनी भवेत्। अपि च वासनापदेन संस्कारविशेषा एवोच्यन्ते। संस्काराश्च नाश्रयमन्तरेण कल्पयितुं शक्यन्ते, न हि कुड्याभावे निराश्रयं चित्रं केनापि सचेतसा निर्मातुं पार्यते। न च तव नये वासनाश्रयः कश्चिदपि संभवति, प्रमाणतस्तदनुपलब्धेः।

T

बौद्धः—अयि महाभाग ! वासनाया निराश्रयत्वेन तदाश्रयभूतः कश्चिदवश्यमस्तीति प्रतिपत्तव्यम् । तदाश्रयश्च आलयविज्ञानमेवेति सर्वमनवद्यम् ।

शंकरः—( सस्मितम् ) अयि विद्वन् ! भवता सर्वस्यैव क्षणिकत्वाभ्युपगमात् अनवस्थितस्वरूपमिदं प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति । न हि कालत्रयसम्बन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वपदार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधानस्मृतिप्रतिसंधानादिव्यवहारः संभवति । आलयविज्ञानस्य स्थिरस्वरूपत्वे च स्वसिद्धान्तहानिः ।

एवं क्षणिकवादो हि वराकश्च विदीर्यते ।
क्वचिदप्येष न स्थातुं विचारादवतिष्ठते ॥२०॥

यथा यथैवैष विचारमाश्रितस्तथा तथा चातिभृशं विशीर्यते ।
न राजतेऽयं क्षणमात्रतोऽपि वा प्रतीयते शार्करकूपभित्तिवत् ॥२१॥

बौद्धः—'तर्काप्रतिष्ठानात्', न च तर्केण निश्चयो भवितुमर्हति, अतो दिव्यपरोक्षपरीक्षया सर्वज्ञत्वमुक्तिमत्त्वत्वं च निश्चीयताम् । यद्यसौ विजयेत तदा सर्वे वयमस्य शिष्या भविष्यामः । सर्वज्ञः श्रीशङ्करोऽस्तीत्यवगमिष्यामश्च । अन्यथा वैपरीत्यम् ।

शंकरः—तथाऽस्तु को, दोषः ।

( ततश्च राज्ञां सभ्यानां च संमत्या बौद्धो मगधाधिपतिः किमप्यानेतुमन्तर्गच्छति )

बौद्धः—( देवीमाराधयन् मनसि ) अत्र स्थितं मन्मनसि प्रतिभासेत—इति प्रार्थयते ।

शंकरः—( ईश्वरं स्मरन् ) अत्र स्थितं मदुक्तं परिणमेत ।

( ततो मृद्धटे निभृतं सवृश्चिकं सर्पमानीय मगधाधिपतिरागच्छति, सभायां घटं स्थापयति च । )

राजा सुधर्मा—बौद्धभिक्षो ! उच्यताम्—किमत्र स्थितम् ।

बौद्धः—श्यामलः सर्पराजोऽत्र वृश्चिकेन समन्वितः ।

( सुधर्मा शङ्कराभिमुखं पश्यति । )

शङ्करः—( सस्मितम् )

तुलसीचन्दनयुतः शालिग्रामो हरिः स्थितः ॥२२॥

सर्वे बौद्धाः जितमस्माभिः, जितमस्माभि ( इति कोलाहलं कुर्वते ) ।

शङ्करपक्षावलम्बिनः पद्मपादादयः शिष्याश्च—'शङ्करोक्तमेव सत्यम्, नैतद्वचोऽन्यथा भवितुमर्हति ।' इति सबाढं सगर्वं च ब्रुवते ।

( इतरे राजानः सभ्याश्च परस्परं मुखमवलोकन्ते । )

मन्त्री—( उत्थाय ) कोलाहलः परिह्रियतां, क्षणं विरम्यतां च । अधुनैव निश्चयो भवति ।

सुधर्मा—यस्योक्तं सत्यं भवेत्, स एव सर्वज्ञः, शास्त्रविद्विजेता चेति निष्पक्षपातं वयं मन्यामहे ।

सभ्या इतरे राजानश्च—एवमेव वयमपि मन्यामहे ।

सुधर्मा—मन्त्रिन्! अधोमुखः क्रियतामसौ घटः, ज्ञायतां च किमत्र स्थितम् ।

मन्त्री—यदाज्ञापयति देवः । ( इति घटमुत्थाप्य अधोमुखं चिकीर्षति )

( अन्तरैव )

मगधराजः—पूर्वं शरावमुद्घाट्यावलोक्यतां किमत्र स्थितम् ।

मन्त्री—( तथा करोति । सर्वतो विलोकयन् ) जितं शङ्कराचार्येण, तथा विधः शालिग्रामो हरिरेवात्र स्थितः, पश्यन्तु भवन्तः । ( इति घटमधोमुखं करोति । ) ततस्तथाविधः शालिग्रामो हरिः अधो विस्तीर्णे विस्तरे पतितः । सर्वे साश्चर्यं पश्यन्ति ।

पद्मपादादयः—जितमस्माभिः । (इति विजयशंखान् धमन्ति । )

बौद्धाचार्यः—क्षणं विरम्यताम्, यावदहं किञ्चिन्निश्चिनोमि । (मनसि) किं देवा अपि विप्रलभन्ते ? ( किमिदं जातमिति निश्चेतुं पुनर्ध्यायति )

आकाशे-देववाणी—

साक्षादीश्वररूपस्य शंकरस्य महात्मनः ।
वचोऽनुसरणेनैव जातो ह्याशीविषो हरिः ॥२३॥

असौ ईश्वरः कर्तुमकर्तुमन्यथाकर्तुं च समर्थः, सर्वमप्येतदुक्तं सदेव ।

बौद्धाचार्यः—( उत्थाय-प्रकाशम् )

ईशोऽसौ भुवनैकहेतुरमलो नित्योऽपि जातः स्वयं
सर्वज्ञोऽपि विचारणासु कुरुते तर्कं स्फुटं बोधयन् ।
लोकानामुपकारतो भुवि गतस्त्रातुं च पापोन्मुखान्
शिष्योऽहं प्रतिपालयस्व भवतः पादारविन्दे स्थितः ॥२४॥

( इति पादयोः पतति । )

शंकरः—उत्तिष्ठ उत्तिष्ठ । ( इति पद्मपादसमीपे उपवेष्टुं निर्दिशति । )

( राजाज्ञया )

वैतालिकः—बौद्धाः पराजिताः सर्वे शास्त्रतत्त्वविचारणे ।
दिव्ये परीक्षणे चास्मात्ते शङ्करमुपागताः ॥२५॥

( ततः कतिचनबौद्धास्तत्समीप उपविशन्ति, कतिचन प्रणम्य निर्गच्छन्ति । )

( ततः कुतोऽपि कोलाहलः श्रूयते । )

सुधर्मा—दौवारिक ! ज्ञायतां कुतोऽयं कोलाहलः ? ।

दौवारिकः*—जं देवो आणवेदि। (इति निर्गत्य पुनः प्रविश्य) महाराय ! केचण बुद्धाओ पराजिया दुरग्गहेण अप्पणो मतं अमुञ्चमाणा चीण-देशं पलाअन्ते ।

सुधर्मा—एवमपि साध्वेव ।

---

* यद्देव आज्ञापयति । महाराज ! केचन बुद्धाः पराजिताः, दुराग्रहेण आत्मनः मतममुञ्चन्तः चीनदेशं पलायन्ते ।

भारतं भारतीनाथं स्थापयन् स्वं प्रकाशयन् ।
गुरुत्वमात्मनश्चैव भारतीयो जयत्वसौ ॥२६॥

( पुनः कलकलरवः श्रूयते । )

सुधर्मा—दौवारिक ! ज्ञायतां, कुतोऽयं कलकलरवः ? ।

दौवा०—*जं देवो आएणवेदि । (इति निर्गत्य पुनः प्रविश्य) महाराय ! मज्जेण उम्मत्ता कोला गायन्तो णच्चन्तो गच्छन्तो य संकरमयं णिन्दंति ! परोप्परं विहसन्ति च ।

सुधर्मा—( सक्रोधम् ) आः ! कथमद्यापि भारते सिद्धान्तभेदो वर्तते ? किमद्यापि विरुद्धमतावलम्बिनः सन्ति ? ।

शंकरः—नहि नहि, एते तु स्वयमेव प्रतिभोत्स्यन्ते ।

सुधर्मा—प्रतिबोध्यैव सकलानैकमत्ये करोम्यहम् ।
दुराग्रहशिरोग्रेषु खड्गधारा पतेन्मम ॥२७॥

सर्वे राजानः—साधु ! साधु !!

(ततः शिष्यवर्गसमन्वितः शङ्करो निष्क्रामति । तदनु सुधर्मा सर्वे, राजानश्च ।)

पटीक्षेपः

( इति निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधिमथुराप्रसाददीक्षित-
कृतौ शङ्करविजयनाटके पञ्चमोऽङ्कः ।



* यद्देव आज्ञापयति । महाराज ! मद्येन उन्मत्ताः कौला गायन्तो नृत्यन्तो गच्छन्तश्च शङ्करमतं निन्दन्ति, परस्परं विहसन्ति च ।

# षष्ठोऽङ्कः

( ततः प्रविशति स्वशिष्येणानुगम्यमानः कौलाचार्यः । )

लघुकौलाचार्यः—आः ! कोऽयं शङ्करः सर्वाण्यपि मतानि विजेतुं प्रभवति ? अहमेनं भैरवप्रभावाद् विजेष्ये, उन्मूलयिष्ये च । ( सुरां पीत्वा परिक्रामन् )

भूमौ जले वा यदि वाऽम्बरे वा कुत्रापि संछिन्नमुखः स्थितः स्यात् ।
त्रातुं विधाता मघवाऽपि विष्णुर्मल्लक्ष्यमासं न हरः प्रभुः स्यात् ॥१॥

( इति पठति । पुनश्चतुर्दिक्ष्ववलोक्य-मनसि ) कृत्ययैव नाशयिष्ये । ( प्रकाशम्—शिष्यं प्रति ) देवदत्त ! इहागत्य तिष्ठ, मत्कार्यसहायकश्च भव । यावत्,

हन्यां दर्शनवादलब्धविभवं सर्वत्र संमानितं
मिथ्याब्रह्मविचारदुर्ग्रहधिया संछिन्नशाभादरम् ।
बाढं सर्वचराचरस्य जगतो नाशे क्षमोऽहं क्षणात्,
कृत्यां भैरवविग्रहामिह समानाय्यैव संयोजये ॥२॥

शिष्यः—( कर्णौ पिधाय ) शान्तं पापम्, शान्तं पापम् । गुरो ! मैवमाचर, महातेजस्वी साक्षात् शङ्करोऽसौ । असावेव सकलचराचरं त्रायते । ( इति वदन्निष्क्रामति । )

कौला०—आः ! गतोऽयम् । ( पुनरितस्ततोऽवलोक्य—मनसि ) अस्तु, तावल्लम्बोदरमाह्वयामि ।

( प्रकाशम्—उच्चैः स्वरेण ) लम्बोदर !

लम्बो०—( यवनिकातः ) आः गुरो !

कौला०—एह्येहि, त्वरितमागच्छ, आगच्छ ।

लम्बो०—अयमागतोऽस्मि, ( इति वदन् मदाविष्टः प्रविशति । )

कौला०—( सहर्षम् ) किम् अस्मत्कार्यसहायकस्त्वं भविष्यसि ?

लम्बो०—अवश्यम् ।

किं कान्तामतिविह्वलां स्मरशरैर्विद्धां नयेयं क्षणात्,
किं वा साध्वतिमादिनीं गुडजवोद्भूतां हरेयं सुराम् ।
किं वा मांससमूतकण्टकमथोपस्थापयेयं क्षणं
यच्चान्यद्भवतो मतं जगति तत् संपादयेयं भृशम् ॥३॥

कौला०—( सहर्षम् ) साधु साधु ! सर्वमाज्ञाकारिणि त्वयि युज्यते । इह मत्समीपमेवागच्छ ।

लम्बो०—यथाऽऽज्ञापयति देवः ( इति तत्समीपमेवागत्योपविशति । ) ( कौलाचार्यः कर्णे एवमेवम् । )

लम्बो०—( उत्थाय ) अब्रह्मण्यम् अब्रह्मण्यम् । गुरो ! नैतद् युज्यते ।

अयं तु—

शान्तः सर्वजनाग्रणीर्गुणनिधिर्लोकप्रियः पण्डितः
श्रेष्ठो ब्रह्मधियां विरक्तमनसां निर्मत्सरः शासकः ।
संसारार्णवपारगोऽतिकृपया संसारबोधप्रदो
लोकालोकचराचरेष्वधिपतिः साक्षादसौ शङ्करः ॥४॥

कौला०—( मदाविष्टः ) अरे मूर्ख ! कथमद्यापि मत्प्रभावो नावगतः ?

पश्य—शम्भुर्वा शङ्करो वा पशुपतिरथवा श्रीधरो भूधरो वा
लक्ष्मीवान् वा क्षमावान् विधिरपि च यमो भास्करो माधवो वा ।
यो वा कोवा भवेद्वा मम विषयगतः सेवमानो ममाङ्घ्रिं
सौख्यं प्राप्नोति नित्यं कथमिह जनतां वीक्ष्य न प्रत्ययस्ते ॥५॥ *

* देवानां पौनरुक्त्यं मदावेशात् ।

लम्बो०—गुरो ! संभाव्यते, परमथापि नैतद् युज्यते ।

कौला०—( सक्रोधम् ) आः ! कथं मत्प्रभावानभिज्ञोऽसि ?

लोकालोकविधातारं प्रलयस्थितिकारकम् ।
त्रैलोक्यस्यापि हनने मां जानीहि क्षमं क्षितौ ॥६॥

लम्बो०—( मनसि ) कथमस्य जिह्वास्थिता वाग्देवी स्वयमेव 'क्षितौ-' पदेन विनाशं बोधयति ? । ( प्रकाशम् ) यद्भवद्भ्यो रोचते तदाचरन्तु ।

परम्—

शमनातिथितां याता मृत्योर्विषयमागताः ।
भृशमुद्वेजिताश्चैव नैव पश्यन्ति दैवतः ॥७॥

( इति वदन् निष्क्रामति । )

कौला०—( क्रोधान्निःश्वसन् परिक्रामति )

बहुदर्शनशास्त्राणां पठनेन गुरुव्रतात् ।
वैमुख्यं भक्तिमार्गाच्च सर्वे शिष्योत्तमा गताः ॥८॥

( ततः प्रविशति कश्चिज्जुङ्गिकः )

जुङ्गिकः—*णमोऽत्थु देवाहिदेवाणं ।

कौला०—( सहर्षम्-मनसि ) निर्भीकः प्राकृतोऽयं जनः । एनं शिष्यं विधाय कृत्यां साधयिष्ये । ( उत्थाय-प्रकाशम् ) चिराद् दृष्टोऽसि ! कुशली भवान् ?

जुङ्गिकः—†तुम्हाणं अणुकंपाए कुसलं चेव ।

कौला०—( समीपमागत्य पृष्ठे हस्तं कृत्वा मुखं पश्यन् ) शोभनोऽसि । भद्रोऽसि । कुशलोऽसि । कथय कदा दीक्षां ग्रहीष्यसि ।

* नमोऽस्तु देवाधिदेवेभ्यः ।

† युष्माकं अनुकम्पया कुशलमेव ।

T

यतः—

दैवात्प्रमादवशतोऽनवधानतो वा मन्त्रोपदेशरहितो नच दीक्षितो वा।
लोकः प्रयाति निरयं सततं त्वमस्माद्दीक्षां गृहाण भवपारमहं तु नेष्ये ॥

जुङ्गिकः—*जहा तुम्हाणं आणा, जदा क्खु चंदाइवलं जुत्तं होउ तदेव दिक्खयउ।

कौला०—( अङ्गुल्या परिगणन् ) अद्य सर्वं युक्तम्।

तुर्यस्तारापतिः शुक्रो भास्करोऽपि च पञ्चमः।
केन्द्रे बुधगुरू लग्नो बलिष्ठः सर्वतः शुभम् ॥१०॥

जुङ्गिकः—†जइ इयाणिं चेव जुज्जइ तदा क्खु दिक्खियउ।

कौला०—शृणोतु तावदस्माकं सिद्धान्तम्।

मांसं मैथुनमीनमद्यमभितो मुद्रां च यो वा भजेत्
संसारार्णवपारगो भवति स प्राज्ञेषु भूरिप्रभः।
पीत्वा लोकसमुद्रलङ्घनधिया सप्तैव वारान् सुरां
गच्छेद्भैरवसन्निधिं वदत रे किं स्यात्ततश्चोत्तमम् ॥११॥

मकारपञ्चकज्ञानाद् याति भैरवसन्निधिम्।
कृतेस्ताद्रूप्यतां चैव मुक्तः संसारबन्धनात् ॥१२॥

जुङ्गिकः—‡साहु साहु।

कौला०—( शिरो वस्त्रेणाच्छाद्य कर्णे एवमेवम्......वस्त्रमाकुञ्च्य ) दीक्षितोऽसि। आगच्छ, संमुखं तिष्ठ, यद् यद् मया वक्तव्यं तत्तत् त्वयाऽपि प्रत्युत्तरणे वक्तव्यम्।

---

* यथा युष्माकमाज्ञा, यदा खलु चन्द्रादिबलं युक्तं भवतु तदैव दीक्षयतु।

† यदि इदानीमेव युज्यते तदा दीक्षयतु।

‡ साधु साधु।

जुङ्गिकः—* एव्वं चेव करिस्से।
कौला०—अहं त्वां कृत्यासाधने नियुञ्जे।
जुङ्गि०—( तथैव वदति ) अहं त्वां कृत्यासाधने नियुञ्जे।
कौला०—अरे मूर्ख ! वद, नियुक्तोऽस्मि।
जुङ्गि०—( पुनः ) अरे मूर्ख ! वद, नियुक्तोऽस्मि।
कौला०—( सक्रोधम् ) अपसर, गच्छ, न ते कार्यम्।
जुङ्गि०—अपसर, गच्छ, न ते कार्यम्।

कौला०—( मनसि ) अयं तु पिशाच इव शिरसि पतितो नैवोपशाम्यति। प्राकृतमेवाश्रये। (प्रकाशम् ) † साहु साहु, युत्तं युत्तं। सिद्धं चेव भेकज्जं। (हस्तेन पृष्ठमास्फालयति।) सोहणोऽसि। उचिट्ठउ। गच्छउ।

जुङ्गि०—‡ पुणो कदा आगमिस्से।

कौला०—कृष्णचतुर्दश्यां पूजावसरे।

( ततो निष्क्रामति जुङ्गिकः। )

कौला०—( मनसि ) एकाक्येवाहं कृत्यां साधये।

( पोटाशं गृहीत्वा उत्थाय प्रकाशम् )

कृत्ये ! नाशय नाशय नगगते विष्वग्मुखे ज्वालिनि,
चोणिस्वर्गरसातलदितिधरेष्वासान्मम द्वेषिणः।
रक्षोयक्षनरामरान्तकहरिब्रह्मासुरध्वंसिके !
प्रत्यक्षीभव साधयाशु सकलं कार्यं शिवाराधिके ! ॥१३॥

( डमरूं वादयन्, इतस्ततः परिक्रामंश्च ) पुनः—

धग् धग् ज्वालास्वरूपे ! जहि जहि सहसा छिन्धि-भिन्ध्यात्मशक्त्या,
भक्त्या चाराधिता त्वं प्रकटय सहसा संमुखीना स्वहेतिम्।

---

* एवमेव करिष्यामि।

† साधु साधु, युक्तम् युक्तम्। सिद्धमेव भेषजम्। उत्तिष्ठतु-गच्छतु।

‡ पुनः कदा आगमिष्यामि।

T

( इतस्ततः परिक्रामन् डमरुं वादयन् सवेगं पोटाशमन्यत्र परिक्षिपति । )

कृत्ये ! कृत्ये नियोज्ये त्वरय दृढगते ! दर्शयात्मानमम्बे !
नो चेच्छक्त्यानयामि त्रिजगति मम को वाग्वशित्वं न यातः ॥१४॥

( इति पठित्वा पुनः पोटाशं परिक्षिपति । )

( मनसि ) आः कथमियं न प्रादुर्भुता !! अस्तु, तन्त्रमन्त्रेणाह्वयामि ।

( प्रकाशम्—डमरुं वादयन् , परिक्रामंश्च )

क्रीं क्रीं वां धारधारे ! चर चर चरणैः स्वामिचित्तानुरक्ते !
हुं ह्रीं क्लीं वीजवीजे ! पशुपतिशपथैरानये त्वां नयस्व ।
चण्डे मुण्डे प्रचण्डे ! भुवनलयमते ! शङ्करानन्दरूपे !
प्रत्यक्षीभूय कृत्ये ! चरतु लघुतरं मामकं कृत्यमेतत् ॥१५॥

( इति सवेगं पोटाशं पात्रे प्रतिक्षिपति । ततः प्रभवत्यग्निः । )

आः ! सिद्धं समीहितम् , आगता कृत्या ।

पटोन्नयनम्

( ततः प्रविशति कृत्ययान्तर्दह्यमानः कौलाचार्यः । )

कौलाचार्यः—आः ! म्रिये । हा तेन वा तत्प्रभावेण वा प्रत्यावर्तिता कृत्या मामेव दहति । ( उच्छ्वसन् पतति । ) हा गुरो ! रक्ष-रक्ष म्रिये ( इति मूर्च्छति । ) ( ततः प्रविशति लम्बोदरः ) ।

लम्बो०—( साश्चर्यम् ) किमिदं जातम् ? ( गुरुं परितः स्पृष्ट्वा ) ( मनसि ) मुमूर्षुरिव प्रतिभाति । ( प्रकाशम्–कर्णे ) गुरो ! किं जातम् ?

कौला०—( किञ्चिदुच्छ्वस्य ) लम्बोदर ! गुरुमाह्वय । हा म्रिये । दह्यते ममान्तः ।

लम्बो०—महाराज ! कथय किमिदं जातम् ?

कौला०—अवधीरितभवद्वचनस्य फलमेतत् ।

लम्बो०—तथापि कथय महाराज ! किं जातम् ।

कौला०—किमन्यत्, ततः परावृत्ता कृत्या मामेव दहति। मन्ये तेन परावर्तिता स्यात्।

लम्बो०—नहि-नहि महाराज! सतु परमकारुणिकः। करुणयैव लोकोद्धरणाय समुत्तीर्णः साक्षादाशुतोषः शङ्कर एव।

कौला०—( ससंतोषम् ) तर्हि मां जीवयिष्यत्यपि किम्?

लम्बो०—अवश्यम्।

कौला०—उच्चैः, हा म्रिये, ( नीचैर्नीचतरैश्च स्वरैः ) नातः परं वक्तुम्...

( इति मूर्च्छति )।

( ततः प्रविशति देवदत्तः। )

देवदत्तः—लम्बोदर! किमिदं गुरोर्जातम्?

लम्बो०—किमन्यत्, अवधीरितभवद्वचनस्य भगवन्तं साक्षाच्छङ्करमेव शङ्कराचार्यं प्रति कृत्यां प्रक्षिपतः फलमुदयते। अस्तु, त्वं तावदेनं रक्ष, अहं परमगुरुमाह्वयामि। ( इति निष्क्रामति। )

देव०—( निर्वर्ण्य ) हा, गुरो! तवैव दुर्विलसितस्य फलमेतत्।

अकारणात्कारुणिकं सर्वलोकातिशायिनम्।
प्रलयस्थितिकर्तारं शङ्करं यज्जिघांसति ॥१६॥

कौला०—( किञ्चित्समुच्छ्वस्य ) हा गुरो! म्रिये; ( दृष्ट्वा ) आः कोऽयम्? देवदत्तः, ( सनिर्वेदम् ) देवदत्त! नाद्यापि लम्बोदरः प्रतिनिवृत्तः, किं गुरुर्नागमिष्यति?, कथमिव चिरयते? किं रुष्टः?, केनापि कारणेन स्थानान्तरं गतो वा?

देवद०—धैर्यमवलम्बस्व, अवश्यमेव गुरुरागमिष्यति।

कौला०—कथमिव चिरयते, ( उच्चैः ) हा गुरो!! दाहेन म्रिये। ( देवदत्तं धृत्वा रुदन् ) हा! अवधीरितभवद्वचनस्य फलमेतत्।

देवद०—धैर्यं गृहाण, नैवं भवत्युपपद्यते। आः पश्य चरणशब्देन मन्ये परमगुरुरागच्छति।

T

( उत्थातुमभिलषन् किञ्चिदुत्थितः सन्पुनः पतति कौलाचार्यः )

( ततः प्रविशति लम्बोदरसहितो गुरुः । )

गुरुः—आः ! किमिदं जातम् ?

कौला०—कृत्यां प्रयुञ्जानस्य, ··· हा प्रिये । नातः परम् (इति मूर्च्छति ।)

गुरुः—यतश्च कृत्याद्यशुभं प्रजायते शुभं च मोक्षादिकमीशमन्दिरम् ।
तमेव लोकस्थितिकारकं हरं जिघांसितुं रे किमसङ्गलं व्यधात् ।१७।

कौला०—( पुनरुच्छ्वस्य ) हा गुरो ! रक्ष माम् ।

गुरुः—अरे दुष्ट ! को नाम तद्विरुद्धाचारिणं रक्षितुं प्रभवति ? ( इति पुनस्तदेव 'यतश्च कृत्याद्यशुभ' मिति पठति । )

भुङ्क्ष्व स्वकृतदुर्विलसितस्य फलम् । ( इति वदन् सक्रोधं जिगमिषति । )

कौला०—( रुदन् ) हा गुरो ! प्रतिपालयस्व, बाढमज्ञोऽस्मि ।

देवदत्तलम्बोदरौ—( गुरोः पदौ धृत्वा ) रक्ष रक्ष प्रतिपालय केनापि प्रकारेण ।

गुरुः—( शान्तः सन् ) गृहाण एनम्, शंकरचरणपर्यन्ते एव पातय, स एव रक्षिष्यते । ( देवदत्तलम्बोदरौ उत्थापयतः । )

पटीक्षेपः-पटोन्नयनम्

( ततः प्रविशति पद्मपादादिशिष्यैर्युतस्य सुखासीनस्य शङ्कराचार्यस्य सविधे तथाविधः सगुरुः कौलाचार्यः । )

शंकरः—( सस्मितम् ) किं जातम् ?

कौला०—( सनिर्वेदम्, ) स्वकृतदुर्विलसितस्य फलम्,

गुरुः—( अन्तरा ) पर्याप्तमनेन स्वकृतमुपभुक्तम्, रक्षैनम्, क्षमस्वैतदपराधम् ।

शंकरः—सर्वजगन्नियन्ता परमेश्वरः सकलमपि चराचरं रक्षति, अयन्तु स्वकृतपश्चात्तापेन स्वयमेव रक्षितः ।

यतः—दुष्कृतानि प्रणश्यन्ति पश्चात्तापेन चेतसः ।
पश्चात्तापात्र च परं प्रायश्चित्तं मतं मम ॥१८॥

(कौलाचार्याभिमुखं पश्यन्) कीदृशी वेदना ?

कौला०—(अन्तः अनुभवन्निव) नाल्पापीदानीं वेदना। (उत्थाय) महाराज ! अज्ञोऽस्मि, क्षमस्व ममापराधम्, (इत्युक्त्वा साष्टाङ्गं प्रणमति।)

शंकरः—स्वस्त्यस्तु, (शिरसि हस्तं दत्त्वा उत्थापयति,)

कौला०—(उत्थाय) साश्चर्यमिव सर्वतः पश्यन्।

ब्रह्मेशो हरिरिन्द्र ओषधिपतिः सूर्यः शिवा भैरवः,
अत्यन्तं बहिरन्तराऽपि हृदये त्वं सर्वतो भाससे ।
किञ्चान्यत्कथयामि नैव किमपि ध्यातं परं ज्ञायते
सर्वं विश्वमिदं चराचरगतं त्वद्रूपवद् वर्तते ॥१९॥

(ततः प्रविशति शिष्यसहितो व्यासः।)

व्यासः—स्वामिन् ! नमो नारायणाय।

शंकरः—नारायणाय।

व्यासशिष्यः—(दण्डवत् प्रणम्य) ॐ नमो नारायणाय।

व्यासः—(भाष्यमवलोक्य—)

वैदुष्यं प्रतिभां युक्तिं भाष्यमेतत् प्रभाषते।
सूर्याचन्द्रमसौ यावत्तावत्कीर्तिर्भवेत्तव ॥२०॥

अपिच—स्वामिन् ! दिग्विजयं विधाय भवता काष्ठाचतुष्के त्विमे
शृङ्गेर्यादिमठाः प्रबुद्धकृतिभिर्युक्ता दृढं स्थापिताः ।
बौद्धाश्चापि निराकृता हि निखिले पुण्यप्रिये भारते
विद्वेषोऽपि निवारितोऽत्र जनताधर्मैक्यमास्थापितम् ॥२१॥

T

किं ते भूयः प्रियं करोमि ? तथापि इदं भरतवाक्यमस्तु—

भूदेवाः सरहस्यवेदनिपुणाः शस्त्रास्त्रनिर्मापकाः,
राजानोऽपि नयान्विताः सुकृतिनो नीत्या प्रजापालकाः।
विद्वांसोऽपि विमत्सराश्च वणिजो दक्षाश्च गोरक्षकाः,
भूयासुः सुखिनः कलासु कुशलाः शूद्राः पुनर्भारते ॥२२॥

इति भूयः पठति ।

पटीक्षेपः

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधिमथुराप्रसाददीक्षित-कृतौ शङ्करविजयनाटके षष्ठोऽङ्कः ।

❀ समाप्तमिदं नाटकम् ❀



T

# शुद्धि-पत्रम्

| पृ० | पं० | अशुद्धयः | शुद्धयः |
|---|---|---|---|
| ३ | ५ | निदिशन् | निर्दिशन् |
| ७ | ६ | सईएां | सुइएां |
| ७ | १० | साउ | सा उ |
| ७ | १० | विइयर्ति | विइयं ति |
| ७ | १३ | वेय वि० | वेयविहि० |
| ७ | १३ | तिरि भवे | तिरिभवे |
| ७ | १४ | लाउ | ताउ |
| ७ | १४ | माणसगयंवि | माणसगयं वि |
| १० | २ | श्राद्धे यो | श्रद्धेयो |
| ११ | २४ | भोक्तृत्वतया | भोक्तृतया |
| १५ | १३ | अम्हेहिं | अम्हे हिं |
| ४३ | ६ | संछिन्न० | संछन्न० |
| ४७ | ६ | सिमं | सिज्भं |
| ४७ | १० | भेकज्जं | भे कज्जं |
| ४७ | २४ | भेषजम् | भवतां कार्यम् |
| ४८ | १६ | मुमूर्षरिव | मुमूर्षुरिव |

T

## सरस्वती

यदि आप देशभक्ति-भावना से ओत प्रोत कोमलकान्त पदावली का रसास्वादन करना चाहते हैं, यदि आप राष्ट्रिय गीतों की निसर्गमधुर छटा देखना चाहते हैं, यदि आप जावा, सुमात्रा, बोर्नियो आदि सुदूरपूर्व देशों में व्याप्त संस्कृत भाषा के वैभव से अभिनन्दित होना चाहते हैं, यदि आप अमेरिका आदि देशों में भारतीय संस्कृति के भग्नावशिष्ट चिह्नों का दर्शन करना चाहते हैं, यदि आप वर्तमान विज्ञान के रेडियो, टेलीविजन, आर्टफीशियल इनसेमिनेशन (कृत्रिम गर्भ धारण) आदि आविष्कारों की प्रतिष्ठा प्राचीन पुस्तकों में प्राप्त करना चाहते हैं, और यदि आप संस्कृत साहित्य में पूर्णतया अनुपलब्ध पद्यमय एकाङ्की नाटक का अध्ययन करना चाहते हैं तो—

शीघ्र ही गौरी सरस्वती के वरद पुत्र आचार्य श्रीसदाशिवदीक्षित द्वारा विरचित इस सरस्वती नामक एकाङ्की नाटक का अवलोकन कीजिये, साथ ही संस्कृत साहित्य के प्रकाण्ड विद्वान् काशी विश्वविद्यालय के संस्कृत शिक्षा-संचालक (*Director of Sanskrit Education*) महामहोपाध्याय श्रीगिरिधर शर्मा चतुर्वेदीजी तथा भूतपूर्व प्रिन्सिपल श्री पं० कालीप्रसाद मिश्र, (काशी हिन्दू विश्वविद्यालय) एवं म० म० पं० परमेश्वरानन्दजी प्रधानाध्यापक ओरियण्टल कालेज जालन्धर, और काशी हिन्दूविश्वविद्यालय के टीचर्स ट्रेनिंगकालेज के प्रोफेसर एस. एन् मूखोपाध्याय की सम्मतियाँ पढ़िये।

T

# भारतविजयनाटकम् (सचित्र)

## लेखक—म० म० पं० मथुराप्रसाददीक्षितः

आज के युग में जिस प्रकार के संस्कृतनाटकों की अपेक्षा थी वह इससे पूरी हो जाती है। कम्पनी के शासनकाल में इस भारतभूमि पर किये गये अत्याचारों का तथा देश भक्तों का जैसा वर्णन आपने भारतविजय में किया है वैसा अन्यत्र दृष्टिगोचर नहीं होता जिसे देखकर मृतक में भी जीवन सञ्चार हो जाता है। उसकी वर्णन शैली से आकृष्ट होकर ही उत्तरप्रदेशीय संस्कृत परीक्षाबोर्ड ने इसे पाठ्यपुस्तक के रूप में अपने यहाँ स्थान दिया है। यदि आप संस्कृत से अनुराग रखते हैं और उसके साहित्य से आनन्द का अनुभव करना चाहते हैं तो हम आप से अनुरोध करेंगे कि एक वार 'भारतविजय' अवश्य पढ़ें।

मूल्य २॥) मात्र।

# आदर्शलघुकौमुदी

## लेखक—म० म० पं० मथुराप्रसाददीक्षितः

यह पुस्तक वास्तव में बालकों के लिये 'आदर्श' का ही कार्य करती है। लघुकौमुदी में जितने कठिन स्थल थे उन्हें पण्डित जी ने बड़े कौशल से सरल कर प्रारम्भिक छात्रों के लिये अत्यन्त उपयोगी बना दिया है। बच्चे अनायास ही इसके द्वारा संस्कृत व्याकरण का यथार्थ ज्ञान प्राप्त कर सकते हैं अतः अपने बच्चों के लिये इसकी प्रति अवश्य मंगाकर देखें। मूल्य १॥) मात्र।

# पाणिनीय—सिद्धान्तकौमुदी

## लेखक—म० म० पं० मथुराप्रसाददीक्षितः

सिद्धान्तकौमुदी से कलेवर में बिलकुल आधी। सिद्धान्तकौमुदी में जितनी फक्किकायें हैं उन्हें हटाकर केवल सूत्र, वृत्ति, उदाहरण मात्र रखे गये हैं। यदि व्याकरण का ज्ञानमात्र अपेक्षित हो तो इसकी एक प्रति अवश्य मंगाकर देखिये।

मूल्य ३॥) मात्र।

पुस्तक मिलने का पता—

**मोतीलाल बनारसीदास, नेपालीखपड़ा, बनारस।**